THE

— OR —

# ॥ सहृदया ॥

VOL.
XIV



NO.

UNIVERSITY LIBRARY.
RECEIVED ON
27 JUN 1925
ALLAHABAD

EDITOR R. KRISHNAMACHARIAR, M. A.

CONTENTS



PRINTED AT THE
SRI VANI VILAS PRESS,
SRIRANGAM.

PUBLISHED AT
MADRAS.

Registered No M 103

*Copyright Registered*

# विषयाः ।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.

2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.

3. The last forme of every issue is devoted to publishing rare and useful works.

4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.

5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, Puraswankum, Madras (N. C.).

6. Annual subscription is Rs. 3 only, including postage.

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैत्यसि ॥

संपु. २.] सौम्यवर्षे चापमासः । [संचि. ९

## सुभाषितानि ।

प्रसिद्धान्याम्नायेष्वधिकपरिशुद्धानि यजने
हुतानि स्वच्छन्दं हुतवह हवींष्यभ्यवहरन् ।
कथं वा दुःस्पर्शान्कतिचन पदार्थानपि भवा-
नुपादत्से शङ्कारहितमिति दूयामह इमे ॥

त्वदीयं माहात्म्यं त्वमिह न विजानासि किमपी-
त्यमुष्मिन्दृष्टान्तो विलसति दृढोऽयं ननु यतः ।
अनायासान्नासापत्रनविनिपातोऽपि सततं
तवाहन्ताहन्ता स्वयमजनि यन्ता गजपते ॥

अवार्येणाप्यन्यैरहह निजशौर्येण सुतरां
समुत्कृष्टस्त्वत्तो भवतु स मृगाणामधिपतिः ।
तथापि त्वामेव क्षितिपतिरसंख्यैरपि धनैः
समोदं क्रीणीते करिवर किमन्यैस्तव गुणैः ॥

कटत्तनाट्ट. इ. के. श्रीरविवर्मराजः ।

# मेघसंदेशविमर्शः ॥

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्य-
न्स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥

एवं शरवणभवमाराध्यातितुङ्गाद्देवगिरेः सत्वरं प्रस्थितवतः तव तीव्रगतिनिरीक्षणभीतै स्कन्दमुपवीणयितुमन्तरिक्षे कृतावस्थानैर्वीणिभिः सिद्धद्वन्द्वैर्दत्तमार्गः सुदूरमध्वानं प्लुतेनैकेनातीत्य, रन्तिदेवस्य कीर्तिमिवातिधवलां चर्मण्वतीमवतीर्य तां मानयन्नात्मानमपि पवित्रीकुरु । अत्र कविः बौद्धमतानुयायिभिः राजभिरत्यन्तं गर्हितः पश्वालम्भः आस्तिकैर्माननीय एवेत्युपदिशति ॥

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचोरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४६ ॥

देवगिरिं समया गगनेऽवस्थिताः सिद्धाः प्रथमं बलाहकस्य मार्गं दत्त्वानुपदमेव 'कुत्राऽसौ गच्छति?' इति विचिकित्सया यावद्दृष्टीः परावृत्य पश्यन्ति, तावन्मेघमनवलोकयन्तः, सुदूरान्तरभावतन्वीं प्रसन्नस्तिमितप्रवाहां जलादानार्थमवतीर्णेन मेघेन सनाथां चर्मण्वतीं अतिदवीयस्तया स्थूलमध्येन्द्रनीलं भुवो मुक्तागुणमिवाकलयेयुः ॥

अत्र चर्मण्वतीजलव्यतिकरेण विराजमानायां कालिन्द्यां शार्ङ्गिणो वारिविहारादिकमनुध्यायन्, चैत्ररथादनूनस्यावश्यं द्रष्टव्यस्य वृन्दावनस्य दूरेऽवस्थितत्वात्, कैलासं प्रति यियासोर्मेघस्य तेन पथा गमनवर्णने अनौचित्यमाकलयन् 'शार्ङ्गिणो वर्णचोरे' इत्येतावता परितुष्यतीव देशावस्थितितत्त्ववित्महाकविः ॥

पद्यमिदं 'एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरान्तरभावतन्वी । मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः' इत्यन्यत्र प्रोक्तमाशयमनुस्मारयति ॥

**तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां**
**पक्ष्मोत्क्षेपादुपरि विलसत्कृष्णशारप्रभाणाम् ।**
**कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं**
**पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम् ॥ ४७ ॥**

इहापि व्रजसुन्दरीणां कुन्दक्षेपानुगमधुकरश्रीमुषां कटाक्षाणामात्मबिम्बं पात्रीकृतवतः श्रीमतो यदुनाथस्य संभावनैव दशपुरवधूविलोकितानां विषयभूते मेघे आरोप्यते इत्यहो! मानसी वृत्तिर्महाकवेः ॥

**ब्रह्मावर्तं जनपदमथच्छायया गाहमानः**
**क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ।**
**राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा**
**धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥ ४८ ॥**

इह महाकविः कुरुक्षेत्रे युयुत्सया समवेतानां पाण्डवानां कौरवाणां च प्रवृत्तं घोरमायोधनं निर्दिशन्, अतिरमणीयेनोपमानेन

कृष्णरूपिणा कालेन कबलितस्य राजन्यनिवहस्य निमित्तमात्रमभवत्सव्यसाची – इति सूचयन्, मेघेन चर्मण्वत्यां गृहीतस्योदकस्य कुरुक्षेत्रे वर्षणमप्यभिव्यञ्जयति ॥

हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे ।
कृत्वा तासामभिगममपां सौम्य सारस्वतीना-
मन्तःशुद्धस्त्वमसि भविता वर्णमात्रेण कृष्णः ॥ ४९ ॥

'सारस्वतीनामपामनुसेवनेन अनपराधिनां कमलानामात्मनो धारापातैः कृतस्य क्षोभस्य प्रायश्चित्तं विधायान्तःशुद्धो भवितासि' इति मेघमुपदिशति कविः । 'वर्णमात्रेण कृष्णः' इत्यनेन 'लाङ्गली गौरवर्णः' इति द्योतयति च ॥

तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शंभोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५० ॥

भवान्या अपि स्पृहणीयसौभाग्यायां जाह्नव्यामात्मनो भक्तिमाविष्कुर्वन्, 'मूर्धानं पत्युरारोह प्रजया च विराड् भव' इत्यादिमन्त्रं स्मृतिपथमारोपयन्, यत्रेयं सुरसरित् हिमालयाद्भुवमवतरति तं प्रदेशमन्तःशुद्धो गच्छेति वलाहकमादिशति महाकविः । प्रालेयाद्रेरुपतटे विराजमानं कनखलं नाम नगरं गत्वा शैलराजादवतरणशोभां जाह्नव्याः साक्षात्कृतवतामेव पद्यस्यास्य रामणीयकं स्पष्टीभवेदिति मन्यामहे ॥

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५१ ॥

पूर्वम 'वर्णमात्रेण कृष्णः' इति सरस्वतीसलिलानुसेवनेनापि मेघस्य शरीरे नीलिमानमापादितं निर्दिश्य, अत्र कविः कृष्णवर्णायाः कालिन्द्याः, अन्तःसलिलाया अदृश्यरूपायाः सरस्वत्याः, शुभ्राया जाह्नव्याश्च मेलनं स्वसंकल्पेन कारयित्वा गङ्गाया अवतरणस्थल एव त्रिवेण्यन्तरं सृजन्, 'क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरी-श्वरस्य । पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥' इत्यादिकमन्यत्र प्रोक्तमाशयमनुस्मारयन्, 'अपारे खलु संसारे क-विरेकः प्रजापतिः' इत्यभियुक्तोक्तिमनुभावयति भावुकान् ॥

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५२ ॥

पद्यमिदमनुवाचयतामस्माकम् 'विशश्रमुर्नमेरूणां छायास्व-ध्यास्य सैनिकाः । दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः' इत्य-न्यत्रोक्ताशयः स्मरणपदवीमास्कन्दति । अचलस्य वृषसाम्यमन्य-त्रापि 'दृप्तः ककुद्मानिव चित्रकूटः' इति प्रादर्शि किल महा-कविना ॥

तं चेद्वायौ सरति सरलस्कन्धसंघट्टजन्मा
बाधेतोल्काक्षपितचमरीवालभारो दवाग्निः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रै-
रापन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ॥ ५३ ॥

पर्वतप्लवनोकहानां मिथःसंघट्टजन्मना वायुवेगात्तूर्णं परितः प्रसरता दवाग्निना तदा तदा जायमानं हरिणादीनामुपद्रवं वर्णयन् यक्षः, मेघस्य हिमालयप्राप्तिनिरूपणावसरे निकटवर्तिनो निजावासस्य स्मरणेन कुबेरेणात्मनो विषयेऽनुष्ठितं पापमनुस्मरन्, प्रकारान्तरेण 'अधमाः असूयालवः अन्योदयासहिष्णवः वित्तमदमत्तचित्ताः निर्निमित्तमेव मादृशानां विलासिजनानामार्तिं जनयन्ति' इति धनपतिं गर्हयन्नीव; 'परस्परविमर्दोद्भूतहर्षातिरेकाः केचन कलहोपजीविनः पिशुनाः दवाग्नय इव धनपतिभवनाभ्यन्तरेषु कृतनिलयाः प्रकृष्टवंशजानामुदारस्वभावानां निष्कारणवैरिणो जाग्रति' इति सूचयतीव च ॥

ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मि-
न्मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम् ।
तान्कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णा-
न्केषां न स्युः परिभवफला निष्फलारम्भयत्नाः ॥

वनगजभ्रमेण वलाहकमभिधावतां शरभाणां भाविनं परिभवं वर्णयन् यक्षः—मृगप्रायैरुदरंभरिभिः कलहोपजीविभिरगणितापरोपतापैरवलेपदुर्दान्तैराविष्टो धनपतिः स्वयं सत्त्वात्प्रच्यावितोऽभूत् । तरुणीललामभूता मत्प्रेयसी नूदारस्वभावा मामेवानवरतमनुध्यायन्ती

मदीयं मङ्गलमेवाशंसमाना प्रतीक्षमाणा च शापस्यावसानवेलामनु-क्षणमुपचीयमानप्रणयप्रसरा 'प्रवासाश्रयात् स्नेहो न कदाप्यपचीये-तेत्यस्य' दृष्टान्तायमाना पिशुनानां मनोरथान् समूलोच्छेदं नाशय-न्ती 'एवं खलु सतीमणिभिर्वर्तितव्यम्' इत्युपदिशति लोकस्य— इत्यात्मनो हृदयगह्वरगोपितमाशयमन्यापदेशरीत्या व्यञ्जयतीव ॥

तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः
शश्वत्सिद्धैरुपहृतबलिं भक्तिनम्रः परीयाः ।
यस्मिन्दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
कल्पिष्यन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५५ ॥

एतादृशैर्दुर्विनीतैराक्रान्तोऽयं हिमालयः अस्मादृशैर्दूरतः परिवर्ज-नीय इति कदाचिन्मेघस्य मनसि वैरस्यं भवेदित्याकलयन् यक्षः, चराचरगुरोश्चरणन्यासेन सर्वतः पवित्रीकृतोऽसौ गौरीगुरुः ब्रह्म-निष्ठैरखिलसुरासुरवन्दनीयैः सिद्धैर्नित्यमनुसेवितः त्वया भक्तिनम्रे-णोपासितः भवतः स्थिरगणपदप्राप्तये कल्पेतेति पयोदं प्रोत्साहयन्, तत्पदाधिगमो विलासिजनानामप्यत्यन्तं स्पृहणीय एवेत्यनुपदमेवास्य-स्मिन्पद्ये विशदयति महाकविः । तुमुलकरकावृष्टिपातैः शरभान् परिपीडयन्मेघः, तरुणेन्दुशेखरस्य चरणन्यासप्रदक्षिणीकरणेन तादृ-शहिंसाजनितपापेभ्यः सद्य एव विनिर्मुक्तो भविष्यतीत्यपि सूचयती-त्यहो! मानसी वृत्तिर्महाकवेः ॥

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
संरक्ताभिस्त्रिपुरविजयो गीयते किंनरीभिः ।

निर्ह्रादी ते मुरज इव चेत्कन्दरेषु ध्वनिः स्या-
त्संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ ५६ ॥

पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ’ इत्युक्तरीत्या महा-नटस्य सेवाप्रकारमिह सम्यग्विशदयन्महाकविः, स्तनितश्रवणानन्दि-नस्य कार्तिकेयमयूरस्य नृत्तमपि मनस्याकलय्य संगीतार्थस्य साकल्यं व्यञ्जयतीव ॥

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान्विशेषा-
न्हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम् ।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
श्यामः पादो बलिविमथनाभ्युद्यतस्येव विष्णोः ॥

‘ आत्मनः स्वरूपसंकोचेन क्रौञ्चरन्ध्रप्रवेशे नितरां क्लेशोऽनु-भूयेत ; किमर्थमिदमाचरणीयं मयेति कदाचिद्विमनीभवेदसौ वलाहकः ’ इति स्वयमेवोत्प्रेक्ष्य ‘ आश्रितजनसंरक्षणाय खलु त्रिविक्रमो वामनी-बभूव ; इह तु आर्तस्यानन्यगतिकस्य मम प्रणयं मानयन् निरुपाधि-कप्रेमार्द्रहृदयः महान्तं क्लेशमङ्गीकुर्वन्भवान् त्रिविक्रममप्यतिशेते इत्याशयं मेघप्रोत्साहनाय व्यङ्ग्यसरण्या निपुणमुपक्षिपति यक्ष इत्य-हो ! रामणीयकमुपमानस्य ॥

( क्रमशः । )

---

## आहारः तज्जरणं च ।

श्वेतकणिकाभ्योऽपि शोणितकणिकानां संख्या हि नितराम-तिरिच्यते। इमाः कणिकाः किल परमसूक्ष्माः चक्षुषा केवलेनानेन अन-वलोकनीयाः अण्डाकारतामनुप्राप्ताः सन्ति। आसां आकृतयस्तु तथा भवन्ति सूक्ष्मतमाः, यथा हि नाम रोमलताभ्योऽपि परमसूक्ष्माणां केशनालिकाभिधानां नाडीनां (capillaries) अन्तः विनैवान्तरायं निरन्तरं असृग्द्रवेण ताः प्रवाह्येरन्; अतः सूक्ष्मदर्शनयन्त्रैरेव (microscope) सन्त्यासां स्वरूपादयः सम्यक् समवलोकनीयाः। रक्तस्य बिन्दौ एकस्मिन् त्रिंशल्लक्षाधिका असृक्कणिकाः स्युरिति निर्णीयते।

पुरुषे कस्मिंश्चन सति निगूढं निहते, तद्धन्तारं अवगन्तुं आद्रियमाणेषु अभिज्ञानेषु, तन्निहन्तृत्वेन सन्दिह्यमानेन पुरुषेण धृते परिधाने संलग्नाः शोणितबिन्दवः प्रयान्ति प्रथमगणनीयताम्। सत्स्वपि निहन्तृत्वेन सन्दिह्यमानपुरुषपरिधाने केषुचन रक्तबिन्दुषु, ते च मानुषस्य वा अमानुषस्य वा शोणितस्य बिन्दव इति परीक्षणं अतीव भवति प्रधानतमम्। तदानीं शिक्षितमतिः भिषगेतदवलोक्य, तदसृग्बिन्दुषु विद्यमानानां असृक्कणिकानां (corpuscles) आकृति-परिमितिप्रभृतीन् विशेषान् विविक्तैरुपायैः परीक्ष्य तच्छोणितं मानुषं उत तदितरप्राणिसम्बन्धि वेति विनैव विचिकित्सां सद्यः समाचष्टे। अत्र च मन्मित्रवरस्य कस्यचन चिकित्सकमहाशयस्य मुखात् श्रुत-चरं विस्मयावहं उदन्तमेकं उपहरामः प्रियपाठकमहाभागेभ्यः। ––

कदाचित् वृद्धा काचन चिकित्सकशालां (Hospital) उपेत्य, तत्रैव चिकित्सार्थं कांश्चिद्दिवसान् स्वात्मनः स्थितिं याचितुकामा, तत्रत्यस्य प्रधानभिषजः सविधमेत्य, 'अब्रह्मण्यं अब्रह्मण्यम्, भद्रमुख, तपस्विनीं मां आदौ अनुकम्पया भवान् अवलोकयतु; किमिति वदेयम्: पूर्वेद्यू रजनीमारभ्य-- न जाने कारणं— प्रस्थं प्रस्थं शोणितं उद्वान्तं मया; घ्राणविवराभ्यां चासकृत् अद्यापि निर्यात्यसृक्; मद्वक्षोविधृतं परिधानं निरूपयतु भवान् निजनयनाभ्यामेव, अशेषमपीदं असृजा समभवत् संसिक्तम्; एवं समविकस्य शोणितस्य उद्वमनेन, निस्सरणेन च निर्निरोधं नासिकाभ्यां, निशया किल एकयैव नितरां अशक्तास्मि संवृत्ता; न प्रभवामि साम्प्रतं वपुरिदं मे धर्तुम्; श्रुत्वैतद्वृत्तं दृष्ट्वा च मदीयां ईदृशीं अवस्थां, इदानीं मद्रक्षणे यत् कर्तव्यं तत् विदधातु भवानेव' इति समभिधाय, क्षरत्क्षतजेन अंसदेशविधृतेन अंशुकाञ्चलेन मुखं नासिकां चाच्छादयन्ती, अतिविह्वलानि स्वकीयानि अङ्गकानि धर्तुं अपारयन्तीव सपदि तत्रैव क्षितौ समुपाविशत्। स च प्रधानभिषक्, स्वसहकारिणं आहूय, 'परीक्ष्य तपस्विनीं एनां विधाय चिकित्सां अनुरूपां, अनुप्रेषयतु अविलम्बितमेव निजावासम्, इत्यादिशत्। सा तु 'आर्य, अहं अनाथा, पथ्यमाहारादिकं उपकल्पयितुमपि न कोऽप्यस्ति मद्गृहे; अतः अत्रैव अन्तर्वैद्यशालं विद्यमानेषु रुग्णेषु (In-patient) अन्यतमात्वेन मां अङ्गीकरोतु भवान्' इत्यब्रवीत्। अनन्तरं स्वयमेवोत्थाय तस्या नासिकादीन् अम्भसा सम्यक् संशोध्य, पश्चात् तदन्तःप्रदेशेषु समवलोकितेषु, न हि किमपि विद्यते स्म व्रणा-

दिकम्; अनन्तरं च सति संशये समुत्पन्ने तस्या हस्तात् तच्चेलं आदाय, तन्निष्ठे शोणिते च सति सम्यक् परीक्षिते, तद्भवन्निर्धारितं, कुक्कुटस्येदं शोणितमिति । अतश्चेत्थमासीदवगतं अन्ततः— सैषा सुतरां दौर्गत्यपीडामसहमाना क्वचिदपि वृत्तिं कामप्यनुपलभ्य वैद्यकशालायां आमयाविनीत्वं आत्मनो नाटयित्वा, तत्र रुग्णेभ्यः प्रत्यहं प्रतिपाद्यमानेन आहारेण कालान् कांश्चन यापयितुकामा, कुक्कुटमेकं निहत्य, तच्छोणितेन स्वचेलाञ्चलं संसिच्य नेपथ्यमिद आत्मनो निपुणं आरचयन्ती स्वशाठ्यविलसितमेवं आसूत्रयति स्म—इति ।

अहो! शाखाभिः उपशाखाभिश्च बहुधा साम्प्रतं सञ्चरमाणाः प्रसङ्गेनानेन सुदूरं अपहृताः स्मः । इतः प्रकृतं पुनरनुसरामः । अत्र तावदादौ आददामो विषयमिमं विचारयितुम्, योऽयं अभिधीयते जनैः उभयजीववर्गीय एवाहारः प्रायेण अभ्यवह्रियत इति । तथा हि— अस्माभिः आहारत्वेन आह्रियमाणेषु पदार्थेषु संत्यज्य सामुद्रलवणं सलिलं च, शेषाः सर्वेऽपि सन्ति जीववर्गीया एव । तेषु च केचन स्थावरजीववर्गेभ्यः शाकादिभ्यः, अपरे च जङ्गमेभ्यो मृगादिभ्यः समुपलभ्यन्ते । जनाः केचन केवलं शाकाहारैः, कतिचन च द्विविधैरपि जीववर्गीयैः पदार्थैः शरीरयात्रामभिनिर्वर्तयन्ति । अथापि तत्र च ये नाम 'वयं केवलं शाकाहाराः, न कदापि प्राणिसम्बन्धिनः पदार्थान् अभ्यवहरेम' इति अभ्युदीरयन्ति, तैरपि दुग्धं, दधि, घृतं, नवनीतं, तक्रं, मण्डं इत्येवमादयो जङ्गमजीववर्गीया अपि पदार्थाः केचनोपभुज्यमानत्वात्, तेषामपि केवलेन स्थावरजीववर्गीयेणैव पदार्थेन जीवनमिति नातीव भवति

मङ्गलमेतत् । किन्तु तेऽनामिषभुज इत्येव वक्तुं साम्प्रतम् । शाकाहारव्रतमास्थितैः जनैरिदं अभवद्भिस्मृतम्, यदुत— दुग्धादीनि च वस्तूनि जङ्गमेभ्य एव जीववर्गेभ्यः समुपलभ्यन्ते— इति ।

अथ कोऽयं शाकाहारो नाम? ये हि नाम भूतले प्ररोहन्ति. 'उद्भिद' इति च उदाह्रियन्ते, ते च, तेषां अवयवाश्च, तद्विकृतिविशेषाश्च वर्गेऽस्मिन् सङ्गृह्यन्ते; इत्थं च तेषां सङ्क्षेपः— तृणानि. कन्दमूलफलशाकपर्णशलाटुप्रभृतयो वृक्षजात्यवयवाः, व्रीहिगोधूममुद्गादीनि धान्यानि (यानि किल लाजपिष्टाद्यात्मना च, ओदनापूपादिरूपपाकभेदैश्च संस्क्रियन्ते), गुडशर्करादयो विकृतयश्च विविधा इति प्राकृतानि वैकृतानि च वस्तूनि गणेऽस्मिन् सन्ति सङ्ख्यातिगानि गणनीयानि ।

सन्ति हि तिर्यग्योनिष्वपि सन्ततं स्वयमेव केवलेन शाकवर्गेण समुपजीविनः प्राणिनो बहव इति विषयोऽयं, विष्वगनुपदं अश्वैः, अजैः, गोभिः गजैश्च (शाकाहारैः) सह सञ्चरमाणानां नास्माकं नाम न भवति विदितचरः; ते हि न कदापि जङ्गमजीववर्गसम्बन्धिनं आहारं कमपि घ्राणेनापि जिघ्रन्ति; केवलं आर्द्राणि शुष्काणि वा तृणानि, पर्णानि, धान्यानि च कानिचनादन्तः कालं यापयन्ति । परं तु बाल्ये वयसि, यत्सत्यं प्राणिसम्बन्धिनं आहारमेव (Animal food) ते ह्युपाददते; यतः ते तदानीं स्वमातुः स्तन्यमेवापिबन्ति । आजन्मनो मासदशकावधि प्राणिनां अशेषाणामपि शैशवे तेषां जीविताय च अभिवृद्धये च मातुः स्तन्यादृते नान्यदस्ति तादृशं अनुत्तमं वस्तु ।

(क्रमशः।)

# निर्वाणे तीर्थंकरमतानि ।



उक्तञ्च शास्त्रे—

'कण्टकस्येह तीक्ष्णता ।

क्रियते रञ्जनं नैव स्रष्ट्रा केनापि बर्हिणाम् ॥

स्वभावाद्धि समुत्पन्नं विश्वमेतच्चराचरम् ।

एतज्ज्ञानेन निर्वाणं नरः समधिगच्छति' इति ।

ततः सर्वथा स्वभावप्रभवाः सर्वे भावा इत्येतेषामभ्युपगम इति ।

प्रश्नः— कालप्रभवाः सर्वे भावास्तज्ज्ञानं निर्वाणहेतुरिति के तीर्थंकरा अवबोधयन्तीति ।

उत्तरम्—भवतीयम्प्रतिपत्तिः कालशास्त्रविदां यैरिदमभाणि–

'जायन्ते कालतः सर्वे भावाः पच्यन्त एव च ।

प्रभवः सर्वभूतानामन्तः कालो हि वर्णितः ॥

उक्तञ्च शास्त्रे—

'यदाऽसन्निहितः कालो म्रियते न नरः क्वचित् ।

शतसङ्ख्यैः शरैर्विद्धो यद्यपि स्यात्समन्ततः ॥

समासन्ने तु कालेऽस्मिन् तृणसंस्पर्शतोऽपि सः ।

प्राणहीनो विजायेत, न हि कोऽप्यत्र संशयः ॥

कालादुत्पद्यते भूतं कालतो नश्यति क्रमात् ।

परिणामो न कालस्य कालशास्त्रेऽभिधीयते ॥ इति ।

तदेतैर्निरधारि कालो नित्यः सर्वस्यैव भूतग्रामस्य कारणञ्चेति ज्ञानादेव निर्वाणाधिगम इति ॥

प्रश्नः—साकारत्वदर्शनान्निर्वाणमिति केषां तीर्थकराणामभ्युपगम इति ।

उत्तरम—पानीयशास्त्रवेदिनामयं सिद्धान्तो यैर्निरवोचि—

कारणं सर्वभावानामादि तज्जलमिष्यते ।
आकाशं पृथिवीञ्चैव भूतं जडाजडात्मकम् ॥

स्रष्टुं यद्धि समर्थं स्यात्पानीयन्तन्निगद्यते ।
आवीचेराकनिष्ठाच्च शासनं नास्य हीयते ॥

जलं सृजति भूतानि तानि संहरते पुनः ।
संहारस्तदयं प्रोक्तो निर्वाणं शास्त्रवेदिभिः' ॥ इति ।

तदेतैस्तीर्थकरैर्जलस्यैवैकान्ततो निर्वाणहेतुत्वं प्रत्यपादीति ।

प्रश्नः— कैस्तीर्थकरैर्विकल्प्यते निराकारत्वदर्शनान्निर्वाणमिति ।

उत्तरम्—वाक्छास्त्रवतान्तीर्थकराणामयं सिद्धान्तो यैरुपावर्णि—

'सर्वेषामेव भूतानामाकाशः प्रभवः परः ।
आदावासीत्स आकाशः सञ्जातश्च ततोऽनिलः ॥

अनिलादग्निरुत्पन्नो, वह्नेरौष्ण्यञ्ज्वलन्ततः ।
सान्द्रीभूतास्तथा हैम्यस्ता आपो ह्यभवन् ततः ॥

धरा ताभ्यः समुत्पन्ना, क्रमादोषधयस्तथा ।
ओषधिभ्यस्ततो जातमन्नजातञ्च पञ्चधा ॥

सर्वमेतत्ततो भूतं यद्भूतं चेतनात्मकम् ' इति ।

तदुक्तं शास्त्रे—

' अदन्ति जीवजातानि लीयन्ते व्योमनि क्रमात् ।
लयः स एष निर्वाणमुच्यते शास्त्रवेदिभिः ' ।। इति ।

तदेतेषाम्मत आकाशः सर्वथा निर्वाणकारणमिति ।

प्रश्नः— साकारनिराकारदर्शनान्निर्वाणमिति के तीर्थकरा अवबोधयन्तीति ।

उत्तरम्— ब्रह्माण्डशास्त्रप्रवर्तकानामयं सिद्धान्तो यैर्निरवोचि—

' नासीत्सूर्यो न चन्द्रोऽसौ न चैतास्तारकाः पुरा ।
न दिवं न धरा चैषा न किञ्चिदपि जातुचित् ।।
आप एवाभवन्नादौ, हैममण्डं ततोऽजनि ।
तस्य पक्त्वा विभिन्नस्य खण्डमेकं समुद्गतम् ।।
दिशमूर्ध्वां, तदा चान्यदवतीर्णमधोदिशम् ।
प्रथमाद्द्यौः समुद्भूता द्वितीयाच्च वसुन्धरा ।।
एतयोरन्तरे ब्रह्मा सर्वलोकपितामहः ।
ससर्ज भूतजातं स चेतनाचेतनात्मकम् ।।
यच्चापि पुनरेवैतद् ब्रह्मण्येव विलीयते ।
ब्रह्माण्डशास्त्रनिष्णातैरेतन्निर्वाणमुच्यते ' ।। इति ।

तदेतदनु हैमाण्डजातो ब्रह्मेति ज्ञानन्निर्वाणहेतुरिति ।।

# श्री कृष्णलीलायितम् ॥

स तां प्रतिशशाप— 'अम्ब! तमसः पारे पदे विलसन्त्याः कस्त्वायमचिन्त्यनिमित्तस्तमसा अभिभवः? सत्यमयं ते पिशुनयत्यधोगमिम्—' इति ॥

तेन च दयितवियोगविपरिणामदुर्विषहेण वाक्छरेण गाढविद्धा व्याधशरविक्षतेव सारङ्गाङ्गना दावानलविस्फूर्जितज्वालालीढकलापेव कलापिनी दृशिमतामसुकरदर्शनां दशामुपेयुषी सा रासेश्वरी नीरन्ध्रनिपतदश्रुबिन्दुपरम्पराभिरुत्सूत्रमुक्ताकलापजातानीव समुन्नतपयोधरसीमन्यवसृजन्ती समाक्रान्तपक्ष्मराजीतटेन अन्तर्विभ्रान्तलोचनशफरेण नासासेतुसीमन्तितेन अश्रुजलस्रोतसा मूर्तमिव प्रेमरसमन्तरपर्याप्तावकाशं बहिर्निष्पतितं दधाना श्वसितप्रकम्पिताधरदलाप्लवमानविद्रुमच्छेदेव क्षीरोदतरङ्गलेखा श्रमाम्बुशीकरतारकिततनुः प्रभाततुहिनकणसंगतेव कुन्दलता ससंभ्रममुपसृत्य कान्तान्तिके बाष्पनिरुद्धकण्ठा न किंचिदालपन्ती तस्थौ ॥

सर्वभूतहृदयभूतस्तु हृषीकेश आगमनादेव गदितार्थः प्रियेण वचसा प्रीणयन् प्रेयसीमुवाच —— 'सुन्दरि! किमेवं दूयसे । अलं विप्रलम्भमनुचिन्त्य । कथंकारं शक्यमावाभ्यां पृथगासितुम्? त्वमसि क्षेत्रभूता मूलप्रकृतिः पुरुषश्चाहम् । आवयोरेव ह्ययं संसर्गः, यस्तु कृत्स्न एष सर्गः। योगिनोऽपि हि त्वामाश्रित्यैव मामधिगन्तुमर्हन्ति ।

(क्रमशः।)

# चन्द्रापीडचरितम् ॥

अथ च मदन्तरङ्गनिर्विशेषया तारळिकाख्यया ताम्बूलकरङ्कवाहिन्या सह तद्गतयैव कथया कथमपि तं दिवसमत्यवाहयम् । अथ दिनान्ते च्छत्रग्राहिणी ममागत्य मामकथयत्—' भर्तृदारिके, यौ तापसकुमारावस्माभिरच्छोदसरस्तीरे दृष्टौ तयोरन्यतरो द्वारि तिष्ठति' इति । अहं तु कञ्चुकिनं समाहूय गच्छ प्रवेश्यतामिति प्राहिणवम् । अथ मुहूर्तादिव तं तस्य सवयसं कपिञ्जलमागच्छन्तमपश्यम् । अन्तिकमुपगताय चास्मै सादरं स्वयमासनमुपाहरम् । उपविष्टस्य तस्य प्रक्षाल्य चरणौ उपमृज्योत्तरीयाञ्चलेन नातिदूरे समुपाविशम् । अथ कपिञ्जलो मुहूर्तमिव स्थित्वा किमपि विवक्षुरिव तस्यां मत्समीपोपविष्टायां तरळिकायां चक्षुरपातयत् । अहं तु विदिताभिप्राया 'भगवन् अव्यतिरिक्तेयमस्मच्छरीरादशङ्कितमभिधीयताम्' इत्यवोचम् । एवमुक्तश्च मया कपिञ्जल एवमवादीत् । राजपुत्रि किं ब्रवीमि । किमारब्धं दैवेन । अपगतायां भवत्यां सरस्तीरसमीपवर्तिनि लतागहने लिखितमिवावस्थितं मन्मथावेशस्य परां कोटिमधिरूढं सवयसमहमद्राक्षम् । उपसृत्य च सखे पुण्डरीक कथय किमिदम् इत्यपृच्छम् । अथ सुचिरं विलोक्य मामायततरं निःश्वस्य सखे कपिञ्जल प्रत्यक्षितसर्ववृत्तान्तोऽपि किं मां पृच्छसीति लज्जामन्थरमवदत् । अहं तु तदाकर्ण्य यावच्छक्ति निवारणीय इति मनसावधार्याब्रवम् । सखे पुण्डरीक सुविदितमेतन्मम । यदेतदारब्धं भवता किमिदं गुरुभिरुपदिष्टम् । उत धर्मशास्त्रेषु पठितम् । उतापरस्तपसां प्रकारः । कथमेतद्युक्तं भवतो मनसापि चिन्तयितुम् । मूढो हि मदनेनायास्यते । तद्धैर्यमवलम्ब्य निर्भर्त्स्यतामयं दुराचारः कामः इत्येवं वदत एव मे वचनमाक्षिप्य पाणौ मामवलम्ब्यावोचत् ।

मन्ये किं बहुनोक्तेन । सर्वथा स्वस्थोऽसि आशीविषविषवेग-विषमाणां कुसुमचापसायकानां पतितोऽसि न गोचरे । सुखमुपदि-श्यते परस्य : मम तु गत इदानीमुपदेशकालः । किं करोमि । को वापरस्त्वत्समो मे जगति बन्धुः । यावत्प्राणिमि तावदस्य मदन-सन्तापस्य प्रतिक्रियां कर्तुमिच्छामीति । एतदाकर्ण्याहमचिन्तयम् । 'अतिभूमिं गतोऽयं न शक्यते निवर्तयितुम् । अकालान्तरक्षमश्चा-यमस्य मदनविकार. । अतिगर्हितेनाकृत्येनापि रक्षणीयान् सुहृदसून् मन्यन्ते साधव' । तदतिह्रेपणमकर्तव्यमप्येतदस्माकमवश्यकर्तव्यमा-पतितम् । का चान्या गतिः प्रयामि तस्यास्सकाशम् । आवेदयाम्येता-मवस्थाम्' । इति चिन्तयित्वा कदाचिदनुचितव्यापारप्रवृत्तं मां स-ञ्जातलज्जो निवारयेदित्यनिवेद्यैव तस्मै सव्याजमुत्थायागतोऽहम् । अत्र यत्प्राप्तकालं तत्करोतु भवतीति । तदाकर्ण्य दिष्ट्यायमनङ्गो मामिव तमप्यनुबध्नातीति सर्वानन्दानामुपरि वर्तमानां किं मया प्रतिपत्तव्य-मिति विचारयन्तीमेव मां प्रतिहारी ससंभ्रमं प्रविश्याकथयत्--भर्तृ-दारिके त्वमस्वस्थशरीरेति परिजनादुपलभ्य महादेवी प्राप्तेति । त-च्छ्रुत्वा कपिञ्जलस्सत्वरमुत्थाय 'राजपुत्रि गच्छामि सुहृत्प्राणरक्षाद-क्षिणार्थम् । अयमञ्जलिः । इत्यभिधाय प्रतिवचनमप्रतीक्ष्यैव प्रय-यौ । अम्बा तु मत्समीपमागत्य सुचिरं स्थित्वा स्वभवनमयासीत् । तया तु तत्रागत्य किं कृतं किमभिहितमिति सर्वमेव शून्यहृदया ना-लक्षयम् । गतायाञ्च तस्यामस्तमुपगते भगवति सवितरि किंकर्तव्य-तामूढा तामेव तरलिकामपृच्छम् । अयि तरलिके कथं न पश्यसि इदमाकुलं मे हृदयम् । न स्वयमण्वपि कर्तव्यमलमस्मि परिज्ञातुम् । उपदिशतु मे भवती यदत्र साम्प्रतम् । अयमेवं त्वत्समक्षमेवाभिधाय

गतः कपिञ्जलः । यदि तावदितरकन्यकेव लज्जां विहाय जनापवादमचिन्तयित्वा सदाचारमतिक्रम्य स्वयमुपगम्य पाणिं ग्राहयामि । तदा गुरुजनातिक्रमादधर्मो महान् । अथ धर्मानुरोधादितरपक्षमङ्गीकरोमि । नियतं स्पृशेन्मां मुनिजनवधजनितं महत्पातकम् । इत्येवमुच्चारयन्त्यामेव मय्यभिनवोदितेन रजनिकरबिम्बेन रमणीयतामनीयत यामिनी । तदा समुपारूढरागममृतमयमिन्दुमण्डलं मृत्युमिव विलोकयन्तीं मूर्च्छा मां निर्मीलितलोचनामकार्षीत् । अथ संभ्रान्ता तरलिका सरभसमुपनीताभिश्चन्दनचर्चाभिः तालवृन्तानिलैश्च लब्धसंज्ञां मामाबद्धाञ्जलिरेवमवादीत् । भर्तृदारिके किं लज्जया गुरुजनापेक्षया वा । प्रसीद प्रेषय माम् । आनयामि ते हृदयदयितम् । उत्तिष्ठ स्वयं वा तत्र गम्यताम् । इति । इत्येवं वादिनीं तां 'उत्तिष्ठ यथाकथंचिदनुद्गतजीविता संभावयामि हृदयदयितं जनमित्यभिदधाना कथंचित्तामेवावलम्ब्योदतिष्ठम् । उच्चलितायाश्च मे दुर्निमित्तनिवेदकमस्पन्दत दक्षिणं चक्षुः । उपजातशङ्का चाचिन्तयम् । इदमपरं किमप्युपक्षिप्तं दैवेनेति । अथ गृहीतविविधकुसुमताम्बूलाङ्गरागया तरलिकयानुगम्यमाना रक्तांशुकेन कृतशिरोऽवकुण्ठना केनचिदपि परिजनेनानुपलक्ष्यमाणा कन्यकान्तःपुरान्निरयासिषम् । निर्गत्य च तत्कालोचितैरालापैस्तया सह तमुद्देशमभ्युपागमम् । तत्र तस्यैव सरसः पश्चिमे तटे पुरुषस्येव रुदितध्वनिं विप्रकर्षात् नातिव्यक्तमुपालक्षयम् । दक्षिणेक्षणस्फुरणेन प्रथममेव मनस्याहितशङ्कातरलिते किमिदमिति सभयमभिदधाना तदभिमुखमतित्वरितमगच्छम् । अथ निशीथप्रभावात् दूरादेव विभाव्यमानस्वरमुन्मुक्तार्तनादं हा हतोऽस्मि हा किमिदमापतितम् । हा दुरात्मन् मदन

निर्घृण किमिदमकृत्यमनुष्ठितं हा दुर्विनीते महाश्वेते किमनेन तेऽप-कृतम् । आः पाप दुश्चरित चन्द्रचाण्डाळ कृतार्थोऽसीदानीम् । हा भगवन् श्वेतकेतो पुत्रवत्सल न वेत्सि मुषितमात्मानम् । हा तपो निराश्रयमसि । हा सरस्वति विधवाऽसि । सखे प्रतिपालय माम् । अह-मपि भवन्तमनुयास्यामि । न शक्नोमि भवता विना क्षणमप्यवस्थातुम् । इत्येतान्यन्यानि च विलपन्तं कपिञ्जलमश्रौषम् । तच्च श्रुत्वा दूरा-देव मुक्तैकताराक्रन्दा यथाशक्ति त्वरितैः पादप्रक्षेपैः पदेपदे प्रस्खलन्ती तं प्रदेशं गत्वा सरस्तीरसमीपवर्तिनि शशिमणिशिलातले विरचितं मृणालमयं शयनमधिशयानं तत्क्षणविगतजीवितं तं जीवितनाथम-द्राक्षम् । उद्भूतमूर्छान्धकारा च तदा काहमगमं किमकरवं किं व्यल-पमिति सर्वमेव नाज्ञासिषम् । ततश्च तथाभूते तस्मिन्नवस्थान्तरे मरणैकनिश्चया तरलिकामब्रवम् । अयि उत्तिष्ठ काष्ठान्याहृत्य विरचय चिताम् । अनुसरामि जीवितेश्वरमिति । अत्रान्तरे चन्द्रमण्डलविनिर्ग-तो दिव्याकृति पुरुषः मृणालधवलाङ्गुलिभ्यां बाहुभ्यां तमुपरतमुत्क्षिप-न्गभीरेण स्वरेण 'वत्से महाश्वेते न परित्याज्यास्त्वया प्राणाः । पुन-रपि तवानेन सह भविष्यति समागमः' इति मामभिधाय सहैवानेन गगनतलमुदपतत् । कपिञ्जलस्तु दुरात्मन् क्व मे वयस्यमपहृत्य ग-च्छसीति अभिधायोन्मुखस्सवेगमुत्तरीयवल्कलेन परिकरमाबध्य तमे-वानुसरन् अन्तरिक्षमुदगात् । पश्यन्त्या एव मे सर्व एव ते ताराग-णमध्यमविशन् । अहं तु द्वितीयेनेव प्रियमरणेन कपिञ्जलगमनेन द्वि-गुणीकृतशोका तस्मिन्नेव सरस्तीरे तरलिकाद्वितीया क्षपां क्षपितवती । प्रत्युषसि तूत्थाय तस्मिन्नेव सरसि स्नात्वा कृतनिश्चया तमेव कमण्ड-लुमादाय तान्येव च वल्कलानि तामेवाक्षमालां गृहीत्वा ब्रह्मचर्यमाश्रि-

त्य देवमिमं शरणार्थिनी स्थाणुमाश्रिता। अपरेद्युश्च कुतोऽपि समुपलब्धवृत्तान्तस्तातः सहाम्बया सह बन्धुवर्गेणागत्य तैस्तैरुपायैः गृहगमनाय मे प्रयतमानः दृढनिश्चयां मां विसृज्य निराशस्सशोक एव गृहानयासीत् । साहमेवंविधा निर्लज्जा निष्फलजीविता निस्मुखा च । इत्युक्त्वा वल्कलोपान्तेन वदनमाच्छाद्य मुक्तकण्ठं प्रारोदीत । चन्द्रापीडस्तु बहुभिरुपसान्त्वनैः संस्थाप्य तां अञ्जलिपुटोपनीतेन निर्झरजलेन प्रक्षालितमुखीमकारयत । अथ क्षीणे दिवसे महाश्वेता मन्दं मन्दमुत्थाय पश्चिमां सन्ध्यामुपास्य कमण्डलुजलेन प्रक्षालितचरणा वल्कलशयनीये सखेदमुष्णं च निःश्वस्य निषसाद । चन्द्रापीडोऽप्युत्थाय सकुसुमं प्रस्रवणजलाञ्जलिमवकीर्य कृतसन्ध्याप्रणामः तस्मिन् द्वितीये शिलातले दुभिर्लतापल्लवैः शय्यामकल्पयत् । उपविष्टश्च तस्यां पुनः पुनर्मनसा तमेव महाश्वेतावृत्तान्तमनुभावयन् पुनरेनामप्राक्षीत् । भगवति परिचारिका तरलिका क गतेति । अथ साकथयत् । महाभाग श्रूयताम् । अमृतसंभवादप्सरःकुलात् मदिरेति नाम्ना कन्यकाभूत् । तस्याश्चासौ देवश्चित्ररथः पाणिमग्रहीत् । तयोश्च दुहितृरत्नमुदपादि कादम्बरीति नाम्ना । सा च मे जन्मनः प्रभृति बालमित्रम् । सयममुनैव मदीयवृत्तान्तेन समुपजातशोका निश्चयमकार्षीत् । नाहं कथंचिदपि सशोकायां महाश्वेतायां आत्मनः पाणिं ग्राहयिष्यामीति । गन्धर्वराजश्च कर्णपरंपरया दुहितुर्निश्चयमश्रौषीत् । गच्छति काले समुपारूढयौवनामालोक्य स तामेकापत्यतयातिप्रियतया च किञ्चिदप्यभिधातुमशक्तो बभूव । अथायमपश्यन्नुपायान्तरं 'वत्से महाश्वेते त्वमेव शरणमिदानीं कादम्बरीमनुनेतुम्' इति सन्दिश्य

क्षीरोदनामानं कञ्चुकिनमद्यैव प्रत्युषसि मत्समीपं प्रेषितवान् । ततो मया गुरुवचनगौरवेण सखीप्रेम्णा च 'सखि कादम्बरि किं दुःखितमपि जनमतितरां दुःखयसि । जीवन्तीमिच्छसि चेन्मां तत्कुरु गुरुवचनमवितथम्' इति सन्दिश्य क्षीरोदेन सार्धं सा तरलिका विसर्जिता । गतायां च तस्यामनन्तरमेवेमां भूमिमनुप्राप्तो महाभाग इत्यभिधाय तूष्णीमभवत् । अथ क्रमेण सुप्तामालोक्य महाश्वेतां चन्द्रापीडः पल्लवशयने शनैः शनैः समुपविष्टः किन्नु खल्वस्यां वेलायां मामन्तरेण चिन्तयति वैशम्पायन इति चिन्तयन्नेव निद्रां ययौ । अथ प्रभाते सन्ध्यामुपास्य शिलातले समुपविष्टायां महाश्वेतायां निर्वर्तितप्राभातिकविधौ चन्द्रापीडे षोडशवर्षवयसा केयूरकनाम्ना गन्धर्वदारकेणानुगम्यमाना तरलिका प्रादुरासीत् । समीपमुपसृत्य कृतप्रणामां तां महाश्वेता 'किं त्वया दृष्टा प्रियसखी कादम्बरी, करिष्यति वा तदस्मद्वचनम्' इत्यपृच्छत् । अथ सा तरलिका व्यजिज्ञपत् । भर्तृदारिके दृष्टा मया कादम्बरी, विज्ञापिता च निखिलं भर्तृदुहितुस्सन्देशम् । आकर्ण्य च यत्तया प्रतिसन्दिष्टम्, तदेष तस्या एव वीणावाहकः केयूरकः कथयिष्यति । इति विरतवचसि तस्यां केयूरकोऽब्रवीत् । भर्तृदारिके देवी कादम्बरी दत्तकण्ठग्रहा त्वां विज्ञापयति । यत्र भर्तृविरहविधुरा प्रियसखी महत्कृच्छ्रमनुभवति, तत्राहमविगणय्यैतत् कथमात्मसुखार्थिनी पाणिं ग्राहयिष्यामि । कथं वा मम सुखं भविष्यति । तन्मा कृथाः स्वप्नेऽपि पुनरिममर्थं मनसि इति । महाश्वेता तु तच्छ्रुत्वा सुचिरं विचार्य 'गच्छ स्वयमेवाहमागत्य यथार्हमाचरिष्यामि' इत्युक्त्वा केयूरकं प्राहिणोत् । गते च केयूरके चन्द्रापीडमुवाच । राजपुत्र रमणीयो हेमकूटः । चित्रा चित्ररथराजधानी । सरलहृदया महानुभावा च कादम्ब-

री । तदितो मयैव सह गत्वा हेमकूटं दृष्ट्वा च तत्र मन्निर्विशेषां कादम्बरीं अपनीय तस्या मोहविलसितं एकमहो विश्रम्य श्वोभूते प्रत्यागमिष्य-मीति । इत्युक्तवतीं तां चन्द्रापीडः 'भगवति दर्शनात्प्रभृति परवानयं जनः कर्तव्येषु । यथेष्टं नियुज्यताम्' इत्यभिधाय तया सहैवोदचलत् । क्रमेण गत्वा हेमकूटं आसाद्य गन्धर्वराजकुलं अवाप्य कन्यान्तः-पुरं श्रीमण्डपस्य मध्यभागे नातिमहतः पर्यङ्कस्योपाश्रये धवलोपधा-नन्यस्तभुजलतावष्टम्भेनावस्थितां सर्वरमणीयकानामेकनिवासभूतां कादम्बरीं ददर्श । सा च सरभससमुत्थाय महाश्वेतां कण्ठे जग्राह । महाश्वेतापि दृढदत्तकण्ठग्रहा तामवादीत् । सखि कादम्बरि भारते वर्षे तारापीडो नाम राजा वसुमतीमासमुद्रां प्रशास्ति । तस्यायं चन्द्रापीडो नाम सूनुः दिग्विजयप्रसङ्गेनानुगतो भूमिमिमाम् । एष च दर्शनात्प्रभृति प्रकृत्या मे निष्कारणबन्धुतां गतः । कथिता चास्य मया बहुप्रकारं प्रियसखी । तदपूर्वदर्शनोऽयमिति विमुच्य लज्जां यथा मयि तथात्रापि वर्तितव्यम् । इति । कादम्बरी तु सविभ्रमकृतप्रणामा म-हाश्वेतया सह पर्यङ्के निषसाद । चन्द्रापीडश्च ससंभ्रमं परिजनोपनी-तायां हेमपादाङ्कितायां पीठिकायां समुपाविशत् । परिजनोपनीतेन सलिलेन कादम्बरी स्वयमुत्थाय महाश्वेतायाश्चरणौ प्रक्षाल्य उत्तरी-यांशुकेनापमृज्य पुनः पर्यङ्कमारुरोह । चन्द्रापीडस्यापि कादम्बर्या-स्सखी मदलेखा प्रक्षालितवती चरणौ । अथ परस्परकुशलानुयोगा-नन्तरं ताम्बूलदानोद्यतां कदम्बरीं महाश्वेता बभाषे । सखि सर्वाभिरस्माभिरयमभिनवागतश्चन्द्रापीड आराधनीयः । तदस्मै तावद्दीयतामिति । इत्युक्ता च सा किंचिद्विवर्तितावनतमुखी शनैरव्य-क्तमिव 'प्रियसखि लज्जेऽहमनुपजातपरिचया प्रागल्भ्येनानेन, गृहाण

त्वमेवास्मै प्रयच्छ' इति तामुवाच । पुनः पुनरभिधीयमाना च तया ग्राम्येव कथमपि चिरात् दानाभिमुखं मनश्चक्रे । साध्वसपरवशा च सा महाश्वेतामुखादनाकृष्टदृष्टिरेव हस्तपल्लवं प्रसार्य चन्द्रापीडहस्ते ताम्बूलमर्पितवती । गृहीत्वा चापरं ताम्बूलं महाश्वेतायै प्रायच्छत् । अत्रान्तरे चागत्य कञ्चुकी महाश्वेतामवोचत् । 'आयुष्मति देवश्चित्ररथो देवी च मदिरा त्वां द्रष्टुमाह्वयतः' इत्येवमभिहिता गन्तुकामा सा सखि चन्द्रापीडः क्वास्तामिति कादम्बरीमपृच्छत् । सा तु 'सखि महाश्वेते किमेवमभिदधासि । दर्शनादारभ्य शरीरस्याप्ययमेव प्रभुः, किमुत भवनस्य विभवस्य परिजनस्य वा । यत्रास्मै रोचते प्रियसखीहृदयाय वा तत्रायमास्ताम्' इति प्रत्युवाच । तच्छ्रुत्वा महाश्वेता तदत्रैव त्वत्प्रासादसमीपवर्तिनि प्रमदवने क्रीडापर्वतकमणिवेश्मन्यास्तामित्यभिधाय गन्धर्वराजं द्रष्टुं ययौ । चन्द्रापीडोऽपि तयैव सह निर्गत्य केयूरकेणोपदिश्यमानमार्गः क्रीडापर्वतमणिमन्दिरमगात् । गते च तस्मिन् गन्धर्वराजपुत्री विसर्ज्य सकलं परिजनं परिमितपरिचारिकाभिरनुगम्यमाना प्रासादमारुरोह । तत्र च शयनीये समुपविश्यैवमचिन्तयत् । अहो किमारब्धं चपलया मया । परित्यक्तः कुलकन्यकानां क्रमः । न परीक्षितास्य चित्तवृत्तिः । आसन्नवर्ती सखीजनोऽप्युपलक्षयतीति मन्दया मया न लक्षितम् । श्रुत्वैतं वृत्तान्तं किं वक्ष्यत्यम्बा तातो वा । किं करोमि केनोपायेन स्खलितमिदं प्रच्छादयामि । तथा महाश्वेताव्यतिकरेण प्रतिज्ञा कृता । पूर्वकृतापुण्यसंचयेनैवायमानीतो मम विप्रलम्भकश्चन्द्रापीडः । इति संचिन्त्य गुर्वीं लज्जामुवाह । चन्द्रापीडोऽपि प्रविश्य मणिगृहं शिलातलास्तीर्णायामुभयत उपर्युपरि निवेशितबहूपधा-

र्शितामेवायमप्यनुष्ठानपदवीमाश्रयतु । किमेतावता परस्य किंचिन्नाम हीयते ; येनास्य शिरःशूलमधिकमाविर्भविष्यति । सकलोऽपि स्वस्वानुसृतमतप्रवर्तकं महापुरुषं भगवदवतारमसंशयमाचष्टे ; काममाचष्टाम्, का नः क्षतिः । 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्' इति हि भगवानेव स्वयं गायति । आवश्यकश्चायं विश्वासः, यतस्तदानीमेव तत्तन्मताभिमानिनां जनानां भविष्यति तत्र तत्र भूयान्समादरः ॥

एवमितरेतरं विसंवादेन विभिद्यमानेष्वपि मतेषु वैदिकानीति, श्रुत्यनुगृहीतानीति, वेदान्तिमतव्यपदेश्यानीति च सकलैरप्यास्तिकैरभ्युपेतानि अद्वैतविशिष्टाद्वैतद्वैतमतान्येव संप्रति सर्वत्र समुपलभ्यन्ते । मतानि चैतानि चिरादेव रूढमूलानि । अथाप्येतन्मतानुसारेण ब्रह्मसूत्रगीतादिकं व्याचक्षाणा अत एव भाष्यकारप्रसिद्धिमुपगतास्त्रय एव पुण्यपुरुषाः । यथा — अद्वैतभाष्यकृतः श्रीशंकराचार्याः, विशिष्टाद्वैतभाष्यकाराः श्रीरामानुजाचार्याः, द्वैतभाष्यकर्तारः श्रीमदानन्दतीर्थाचार्याः । यथा अद्वैतिनः श्रीशंकराचार्यान् शिवस्य, यथा च द्वैतिनः श्रीमदानन्दतीर्थाचार्यान् वायोः, तथा विशिष्टाद्वैतिनोऽपि श्रीरामानुजाचार्यान् [1]शेषस्यावतार इति प्रमाणैरुपपत्तिभिश्च सर्वथा प्रतिपद्यन्ते ॥

अद्वैतभाष्यकारो हि अभेदश्रुतीर्निर्गुणश्रुतीश्च मुख्याः परिगृह्णानः, भेदश्रुतीनां सगुणश्रुतीनां च व्यावहारिकदशादिकल्पनया स्वयमेकां गतिमभिप्रदर्शयामास । भेदश्रुतिमवलम्बमानस्य द्वैतभाष्य-

1. विष्वक्सेनावतारः, पञ्चायुधावतार इति केचित् । लक्ष्मीपतेरवतार इति तु परे ।

कारस्यापि अभेदश्रुतयो न स्वरसवाहिन्यः संपद्यन्ते । घटकश्रुतिबलेन सर्वं समर्थयतो विशिष्टाद्वैतभाष्यकारस्य तु समस्तकल्याणगुणबोधनेन सगुणश्रुतयः, तथा हेयगुणराहित्यप्रतिपादनेन निर्गुणश्रुतयः, विशिष्टैक्यविनिवेदनेन अभेदश्रुतयः, स्वरूपतस्तत्त्वेषु भेदवादेन भेदश्रुतयश्च स्वरसतः समुपपद्यन्त इति सर्वश्रुतिसामरस्यमस्मन्मत एवेति विशिष्टाद्वैतिन[1]: ॥

ऐक्यानुसंधानं भक्तेर्न पोषकं भवति । तरतमभावावगमे हि उत्कृष्टे भविष्यत्यवरस्य महीयसी प्रीतिः । न च विना भगवति भक्तिं मोक्षो नाम केनचिदुपलभ्येत पुरुषार्थः । सगुणोपासनायास्तत्र प्रयोजकत्वकल्पनातो वरं तस्यास्तत्र हेतुभावः श्रुत्यादिसिद्धः सर्वथाभ्युपगन्तुम् । तथा च केनचिदप्यंशेन अभेदबुद्धिं दूरीकुर्वता पारमार्थिकं द्वैतमवगच्छतैव ननु शक्यते भक्तिमता सुकृतिना पुरुषेण परमः पुरुषार्थोऽयमधिगन्तुमिति द्वैतमिदं ज्याय इति द्वैतिनः ॥

अद्वैतभाष्यकारस्यापि पारमार्थिके द्वैत एव तात्पर्यम् । परं तु 'सर्वं क्षणिकम् । शून्यं तत्त्वम्' इत्येवं सर्वतः समुज्जृम्भमाणे वेदविरुद्धे बौद्धसिद्धान्ते तदनुसारेण चिराज्जातसंस्कारायां लोकस्य मनःप्रवृत्तौ जगत्कारणस्य एकस्य वापि वस्तुनः सत्यत्वं नित्यत्वं चावश्यसाधनीयमापतितमिति तात्कालिकजनवासनानुसारेण सर्वमिथ्यात्वम्, जगत्कारणभूतत्वेन एकस्य वस्तुनः परब्रह्मणः सत्यत्वं च स्थापितमद्वैतभाष्यकारेण । न ह्येतावता श्रीशंकरा-

1. 'मिथो भेदं तत्त्वेष्वभिलपति भेदश्रुतिरतो विशिष्टैक्यादैक्यश्रुतिरपि च सार्था भगवती । इमावर्थौ गोप्तुं निखिलजगदन्तर्यमयिता निरीशो लक्ष्मीशः श्रुतिभिरपराभिः प्रणिदधे ॥' इति सकल्पसूर्योदये कवितार्किकसिंहः ।

चार्याणामत्रैव नैर्भर्यमित्यङ्गीकरणीयम् । कालेन च जगत्कारणस्य एकस्य वस्तुनः सत्यत्वप्रतिपत्तौ जगति रूढमूलायाम्, भगवति भक्तिमुद्रचयितुं भेदं पारमार्थिकमभेदं च विशिष्टवेषेण विशिष्टाद्वैत-भाष्यकार उपपादयामास । ततश्च ततोऽपि भक्तिविशेषं परिपोषयि-तुमंशतोऽप्यभेदमसहमानो द्वैतभाष्यकारः सर्वात्मना भेदं परमुररी-चक्रे । इत्थं च विमृश्यमाने वस्तुतत्त्वे त्रयाणामपि भाष्यकाराणां न खल्वैकमत्यं युज्यते निराकर्तुम् । दशा हि नाम व्यावहारिकी वा भवतु पारमार्थिकी वा । सगुणोपासना भगवति भक्तिश्च त्रयाणामपि भाष्यकृतां संमतैव पुमर्थसमर्थकतया । एवं च त्रयाणामपि भाष्यका-राणां सति संभवति तात्पर्यैक्ये, नेषा परस्परपराङ्मुखीभावकल्प-नापूर्वकमाधुनिकानामस्माकं मतप्रद्वेषदूषणादिकं सर्वथा बालिशकृत्य-मेवेति नव्या विमर्शकाः ॥

वस्तुतो वस्तुतत्त्वं यद्वा तद्वा भवतु नाम । न वयमचर्म-चक्षुषः । ते ते यावद्बुद्धिबलं कयापि गमनिकया स्वैरं किमप्युत्प्रेक्ष-न्ताम् । नास्माकं किमपि वक्तव्यमत्र लक्ष्यते । इदं पुनर्न वयमन-भिधातुं पारयामः— यदुत विशिष्टाद्वैतभाष्ये अधीयमाने तत्र तत्र भाष्यकृता योजितैर्भगवतो विशेषणैरनुसंधीयमानैर्यावती भगवति भक्तिस्फूर्तिरनर्गलमस्माकमाविर्भवति, तावती सा न किलेतरयोः परयो-र्भाष्ययोरधीयमानयोरिति तटस्थदृष्टावास्थितायामकामैरप्यपरैरवश्य-मिदमभ्युपेयं भवतीति । यथा च श्रीशंकरभाष्ये अधीयमाने शब्दाः पुरस्तादथ परस्तादर्थाः प्रादुर्भवन्ति पुरतोऽस्माकम्, तथा श्रीरामा-नुजभाष्ये अर्थाः प्रथमतः पश्चाच्च शब्दा आत्मानमभिदर्शयन्ति । यथा वा प्रबलयुक्तिप्रमाणनिरूपणेन अद्वैतभाष्यात्, तथा भक्तिसु-

धारसनिष्यन्देन द्वैतभाष्यादपि विशिष्यते विशिष्टाद्वैतभाष्यमिति सकृदवलोकनेनैव, दृढं विश्वसिमः, सहृदयः स्वयमेव नूनमवगमिष्यति ॥

एवमखिलैरप्यभिवन्दनीयमहिमसु त्रिषु भाष्यकारेषु विशिष्टाद्वैतभाष्यकृतो भगवद्रामानुजाचार्या एव प्रकृतस्य गद्यत्रयाख्यस्य प्रबन्धरत्नस्य प्रणेतारः ॥

एते किल इतश्च प्राक् प्रायो [1]नवम्यां शताब्द्यां भगवतो यामुनाचार्यस्य पौत्र्यां कान्तिमत्यपराभिधानायां भूदेव्यां हारीतकुलतिलकान्महात्मनः केशवसोमयाजिनः श्रीभूतपुर्यां लब्धजन्मानः, बाल्य एव सर्वाण्यपि शास्त्राणि विशिष्य श्रीयादवप्रकाशयतिवर्यादद्वैतग्रन्थांश्च समग्रमधीत्य भगवदनुग्रहेण तदा तदा स्वयमपसृतमहापदः प्रकटीकृतपरिशुद्धनिजप्रभावाः, अनेकेभ्य आचार्येभ्यो यथासंप्रदायं तांस्तानर्थविशेषानात्मना समधिगत्य सर्वदा भगवत्कैंकर्यैकप्रवणमनसो भगवद्गुणानुभवसमधिगतपरमानन्दनिर्भराः, कालेन च प्रव्रज्यां परिगृह्य श्रीरङ्गादिषु दिव्यदेशेषु भगवत्सेवैकपरायणाः परवादिविधूननचणवचोगुणाः, सुचिरमध्यात्मविद्यां यथासंप्रदायं बहुभ्यः शिष्येभ्य उपदिश्य [2]स्वाश्रिताननेकानुज्जीवयन्तः, सर्वात्मना विशिष्टाद्वैतसिद्धान्तं सर्वतोमुखमकुतोभयं च विधाय वेदार्थ-

---

1. एकोनविंशत्युत्तरशताधिकचतुःसहस्रतमे पिङ्गलनाम्नि कलेर्वत्सरे चैत्रमासि शुक्लद्वादश्यां भृगुवासरे आर्द्रानक्षत्रे कृतावताराः । क्रिस्तीयसंवत्सरः = 1019.

2. ‘रामानुजः सप्तशतैर्यतीनां पीठैश्चतुःसप्ततिभिः समेतः ।
एकान्तिभिर्द्वादशभिः सहस्रैः श्रीरङ्ग आस्ते यतिसार्वभौमः ॥’

संग्रहादीनि प्रबन्धरत्नान्यनुगृह्णन्तः, शिष्यपरम्परया तेषामिव स्वसिद्धान्तस्य च सर्वतोऽपि प्रचारं समुत्कर्षं च भगवन्तं प्रार्थयमानाः, सर्वथा परहितैकप्रवणाः परार्थैकजीविताः परमपुरुषैकदैवताः परकलितप्रशंसानिन्दादिपराङ्मुखाः परं धाम प्रपेदिरे ॥

एतैश्च कृतेषु प्रबन्धरत्नेषु श्रीभाष्यव्यपदेशविख्यातं श्रीब्रह्मसूत्रभाष्यं विशिष्टाद्वैतसिद्धान्तानुसारेण तत्तदर्थप्रतिपादकं प्रबलाभिर्युक्तिभिरप्रतिहतैश्च प्रमाणैः परमतनिराकरणचणगुणगणमखिलसूत्राक्षरात्यन्तानुगुणमपरैरप्यभिनन्दनीयमुमधुरवचोगुम्भं विलसति विश्वतोऽप्युदञ्चितभगवद्गुणानुसंधानसरसरमणीयम् ॥

श्रीगीताभाष्यमप्येतैरनुगृहीतमभिख्ययैव सुखावसेयविषयजातम् ॥

वेदान्तसार इति, वेदान्तदीप इति च द्वावेतेषामेवापरौ ग्रन्थौ, अतीव संग्रहेण किंचिदिव विस्तरेण च श्रीबादरायणसूत्राणि श्रीभाष्याकलितफक्किकया अक्षरतोऽपि व्याचक्षाणौ, ब्रह्मसूत्रवृत्ती भवतः ॥

वेदार्थसंग्रहनामकमेतद्विरचितं प्रबन्धरत्नं तु विशिष्टाद्वैतमतानुरोधेन व्याख्येयानामुपनिषदां व्याक्रियाप्रक्रियादिशाप्रदर्शनपरम् । अत एव श्रीभाष्यादिभिरपि गतार्थतामालोच्य श्रीभाष्यकारैरुपनिषदां न व्यरचि भाष्यं पार्थक्येन ॥

नित्यग्रन्थाभिधानोऽप्येकः प्रबन्धः श्रीभाष्यकारैरारचितः । तत्र च श्रीवैष्णवसमयिनामहरहरनुष्ठेया धर्माः कर्मस्वरूपाणि च सन्ति साधु प्रतिपादितानि ॥

प्रकृतं च गद्यत्रयाख्यमत्युत्तमं प्रबन्धरत्नं श्रीभाष्यकारैः स-

दाचार्यसंप्रदायागतद्वयवचनपूर्वकमात्मकृतस्य भरन्यासस्य, स्वकृतप्रपत्तिप्रसन्नदिव्यदंपतिप्रकाशितस्य अभयप्रदानस्य च स्वरूपमन्यानप्यवगमयितुमुपनिबद्धमिति संप्रदायविदः । एकैकस्यापि गद्यस्य पार्थक्येन विषयप्रयोजनादिकं तु तत्तद्भाष्यारम्भ एव स्फुटं प्रकटीकृतमिति नेह तत्र विस्तरः स्वीक्रियते ॥

वस्तुतः सर्वदापि भगवन्महिमानुसंधानैकरसिकानां श्रीभाष्यकाराणां श्रीभाष्यगीताभाष्यादिष्ववगत्यापतितेन परमतदूषणकोलाहलेन कियतश्चन क्षणान् भगवद्गुणानुभवपरमानन्दपराङ्मुखीभावक्लिश्यमानमानसानामखण्डधारासारनयेन अविच्छेदभगवद्गुणानुभवप्रकारमुच्चैरुच्चार्य भगवत्प्रसादप्राप्तिमुपवर्ण्य कृतार्थभावमात्मनः कलयितुकामानां हृदयपयःपयोधेरनर्गलमभितः प्रसरन्ती सुधालहरिपरंपरा किल श्रीमदिदं गद्यत्रयमित्यपि वयमुत्पश्यामः ॥

एतद्गद्यत्रयभाष्यकर्तारश्च श्रीमन्निगमान्तमहादेशिकाः कलेरेकसप्तत्यधिकशतत्रयोत्तरचतुःसहस्रतमे शुक्लनाम्नि संवत्सरे नभस्यमासि श्रवणनक्षत्रे श्रीकाञ्चीनगरपरिसरे हिमोपवनाभिधाने देशे कृतावताराः । एतेषां च मातरपितरौ श्रीमती तोतारम्बा, श्रीमाननन्तसूरिश्च । 'अयं कुक्षौ समुत्पन्नः शक्तेर्गर्भः सुतस्य ते । समा द्वादश तस्येह वेदानभ्यस्यतो गताः' इत्युक्तप्रकारेण लोकविलक्षणताप्रकाशनाय एतैरपि द्वादश परिवत्सरान् गर्भे स्थितं मातुः ॥

एते च तन्मातापितृस्वप्नवृत्तान्तानुरोधेन[1] श्रीमद्वेङ्कटाद्रिना-

1. कुसुमकैंकर्यमनुदिनमनुतिष्ठतः श्रीमदनन्तसूरेर्हस्ते श्रीनिवासेन स्वकीया घण्टा अदायीति, तेन च दत्तां तां तोतारम्बा स्वयमगिरदिति च ताभ्यां दृष्टः स्वप्नः ।

यस्य श्रियःपतेर्घण्टाया अवतार इत्यखिलानामप्यास्तिकानामभिप्रायः[1]। अमुं च विषयं स्वयमेव श्रीमदाचार्याः संकल्पसूर्योदये संकलयामासुः ॥

बाल्यादारभ्यैव सर्वत्र बुद्धिवैभवं प्रश्रयं भगवति भागवतेषु च भक्तिं शान्तिं दान्तिं च बिभ्राणैरेतैर्विंशतिवयस्कैरेव सद्भिर्विश्वा अपि विद्या वादिहंसाम्बुवाहादात्रेयश्रीरामानुजाचार्यवर्यात्स्वमातुलादधिगता[2] ॥

अनन्तरं च यथासंप्रदायमधिगतविशिष्टाद्वैतमतसारसर्वस्वैः श्रीमदाचार्यैः श्रीकाञ्चीश्रीरङ्गादिषु दिव्यदेशेषु भगवत्सेवापरायणैर्भागवतप्रावण्यपरिपूर्णैः[3] सुचिरमवस्थाय श्रीभाष्यादिप्रवचनमाचरद्भिरनेके कृतमतयः शिष्यास्तत्त्वहितपुरुषार्थोपदेशेन धन्यजन्मतामवापिताः । पराजिताश्च बहवः परवादिनस्तदा तदा प्रमाणप्रबलवाचोयुक्तिनिकरेण सर्वतः सारेण ॥

एतैश्च न केवलं संस्कृतभाषायाम्, परं द्राविडभाषायामपि मणिप्रवालरीत्या शुद्धगाथारूपेण च बहवो ग्रन्थाः[4] व्यरच्यन्त ।

1. 'विश्रामिनो विबुधवैरिवरूथिनीनां पद्मासनेन परिचारविधौ प्रयुक्ता । उत्प्रेक्ष्यते बुधजनैरुपपत्तिभूम्ना घण्टा हरेः समजनिष्ट यदात्मनेति ॥'

2. 'रामानुजार्यादात्रेयान्मातुलात्सकलाः कलाः । अवाप विंशत्यब्दे यः' इति श्रीकुमारवरदगुरवः । आचार्यैरपि सकल्पसूर्योदये ' विंशत्यब्दे विश्रुतनानाविधविद्यविशद्वार श्रावितशारीरकभाष्यः ' इति स्वयमुक्तम् ॥'

3. कदाचिदपचिकीर्षया कैश्चन कुदृष्टिभिर्द्वारि लम्बितायामुपानहि स्वशिरसि लग्नायाम् ' कर्मावलम्बिनः केचित्केचित् ज्ञानावलम्बिनः । वयं तु हरिदासानां पदरक्षावलम्बिनः ' इति श्रीमदाचार्यैरभिहितम् ॥

4. संस्कृतभाषायाम्— साहित्ये, चतुर्विंशतिसर्गात्मकं यादवाभ्युदय

काव्ये वा नाटके वा स्तोत्रजाते वा यत्र कुत्र वा एतेषां पदविन्यासः सर्वात्मना भगवति भक्तिं स्वसिद्धान्तसारं च क्रोडीकुर्वन्नेव भवतीति नन्वानुभाविकमिदमवलोकयितृणाम् ॥

एतेषां वैदुष्यं परवादिनिरसनवैभवं चावलोक्य तदानींतनाः पण्डिता एव 'कवितार्किकसिंहः' इति बिरुदेन श्रीमदाचार्यान् समभावयन् ॥

एकदा च श्रीकृष्णमिश्रवादसमयप्रकटितपराक्रमपरितुष्टेन श्रीरङ्गनाथेन श्रीमदाचार्येभ्यः 'वेदान्ताचार्यः'[1] इति, श्रीरङ्गनायिकया 'सर्वतन्त्रस्वतन्त्रः' इति च बिरुदं प्रसादितमर्चकमुखेन ॥

सर्वदा सदाचारानुष्ठानैकबद्धश्रद्धानां च श्रीमदाचार्याणामुञ्छवृत्त्या देहयात्रां निर्वर्तितवतामनितरसाधारणं नैःस्पृह्यं ननु व्यक्त-

---

नाम महाकाव्यम्, श्रीरङ्गनाथपादुकामहिमवर्णनपरं सहस्रपद्यात्मकं पादुकासहस्रम्, सुभाषितनीवी, हंससंदेशकाव्यम्, सकल्पसूर्योदयं नाम महानाटकम्, हयग्रीवस्तोत्रादीनि सहस्राधिकश्लोकसंकलितानि बहूनि स्तोत्राणि, द्रमिडोपनिषत्तात्पर्यरत्नावलीप्रभृतीन्यन्यानि च कतिचन । वेदान्ते, न्यायसिद्धाञ्जनम्, न्यायपरिशुद्धिः, अधिकरणसारावलिः, तत्त्वमुक्ताकलापः, सर्वार्थसिद्धिः, शतदूषणी, चकारसमर्थनम् । वेदान्ते व्याख्यानरूपाणि, गीताभाष्यव्याख्या तात्पर्यचन्द्रिका, श्रीभाष्यव्याख्या तत्त्वटीका, गीतार्थसङ्ग्रहरक्षा, स्तोत्रभाष्यम्, गद्यत्रयभाष्यम्, ईशावास्योपनिषद्भाष्यम् । मीमांसायाम्, सेश्वरमीमांसा, मीमांसापादुका । अन्ये च श्रीवैष्णवसमयाचारादिप्रतिपादकाः सच्चरित्ररक्षानिक्षेपरक्षापाञ्चरात्ररक्षाप्रभृतयः । द्रामिडभाषायां च—श्रीमद्रहस्यत्रयसारप्रभृतयः द्वात्रिंशद्रहस्यग्रन्थाः, 'देशिकप्रबन्धः' इति प्रसिद्धिमुपगतो गाथात्मको द्रामिडप्रबन्धः । इत्थं च संकलय्य तैर्विरचिताः प्रबन्धा एकविंशत्युत्तरशतम् । प्रायेण सर्वेऽपि ग्रन्था मुद्रापिताः ।

1. 'श्रीवेङ्कटनाथार्यः' इति सांस्कारिकं नाम ।

मेव वैराग्यपञ्चकावलोकनेन[1] ॥

किं बहुना— नास्ति कश्चिदेतावति जगति समुत्पन्नः यः खल्विमानाचार्यान् पाण्डित्यप्रकर्षेण मेधाविलसितेन ग्रन्थकरणकौशलेन प्रमाणप्रदर्शनसामर्थ्येन वैराग्यभारेण भगवद्भक्तिभारेण चातिशयितुं प्रभवति । अत एव किलैते श्रीमदाचार्याः कविभिः कवय इति, दार्शनिकैर्दार्शनिका इति, वेदान्तिभिर्वेदान्तिन इति, निबन्द्धृभिर्निबन्द्धार इति, कर्मठैः कर्मठा इति, ज्ञानिभिर्ज्ञानिन इति, भक्तैर्भक्ता इति, प्रपन्नैः प्रपन्ना इति, वादिभिर्वादिन इति, शान्तैः शान्ता इति च बहुधा संभाव्यन्ते ॥

एतैश्च श्रीमदाचार्यवर्यैरस्य गद्यत्रयस्य सत्यपि प्राचीने व्याख्याने क्वचित्क्वचित्तत्रास्वरसमालोचयद्भिरेव नव्यमिदं भाष्यमवतारितमात्मनेति एतद्भाष्यस्थकतिपयप्रघट्टकपर्यालोचनायामवगम्यते । अस्य च भाष्यस्य गुणनिरूपणम् 'नन्विदं श्रीमन्निगमान्तमहादेशिकैरनुगृहीतम्' इत्येतावद्विलेखनमात्रेणैव, मन्यामहे, संपूर्णमाचरितमस्माभिरिति ॥

एतादृशस्य च सभाष्यस्यास्य गद्यत्रयस्य नासीदेतावता शुद्धं च समीचीनं च किमपि मुद्रणमिति सर्वथा विषादस्थानमेत-

1. उञ्छवृत्तिमातिष्ठमाना आचार्याः कदाचित् राजकुललब्धप्रतिष्ठैः श्रीविद्यारण्यस्वामिभिस्तत्रागमनं प्रार्थिताः पञ्च पद्यानि उत्तरतया प्राहिण्वन् । तत्पद्यसमुदायस्य वैराग्यपञ्चकमिति व्यपदेशः । तत्रायमादिमः श्लोकः—'क्षितिं किमनलं भवेदनलमौदरं बाधितुं पयः प्रसृतिपूरकं किमु न धारकं सारसम् । अयत्नमलमल्लकं पथि पटच्चरं कच्चरं भजन्ति विबुधा मुधा ह्यहह कुक्षितः कुक्षितः ॥'

दस्माकम् । पूर्वं द्विगान्धलिपिभिर्मुद्रितमपीदं सम्यक् शोधितमिति वक्तुं न पार्यते । काञ्च्यां च कियतश्चन कालात्प्राक् कैश्चन बहुविद्भिः संशोध्य सम्यगान्धलिपिभिरारब्धमुद्रणमप्यर्धावसितमसमग्रममाममवनिष्ठन इत्यतितरामिदं शोकास्पदमेतद्ग्रन्थकाङ्क्षिणां विदुषाम् ॥

तदिदं सर्वमालोच्य, अनेकान् श्रीकोशानालोक्य, निधार्य समीचीनं पाठम्, यावच्छक्ति प्रमादरहितं मुद्रापयित्वा, प्रबन्धरत्नमिदं विदुषां प्रीत्यै आत्मनः कृतार्थभावाय च बहिरवतारयामः ॥

यावच्छक्ति परिशोधितेऽप्यस्मिन् ग्रन्थे अस्मदीयबुद्धिप्रमोषादिना यदि स्युरशुद्धयः, प्रार्थयामहे, तर्हि ताः स्वयं परिनिर्मृज्य कृपयास्मान् बोधयन्तु; येन द्वितीयस्यां मुद्रणायां वयमतीव जागरिष्यामः ॥

रायंपेट्टै. चक्रवर्ति. कृष्णमाचार्यः ।



॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. २.] सौम्यवर्ष पौषमासः । [संचि. १०.

## सुभाषितानि ।

निराबाधं पक्षे विलसति वलक्षे सकुतुकं
चकोरोऽयं ज्योत्स्नां रजनिमपि कृत्स्नामनुभवन् ।
अनेहस्यायाते पुनरथ विभाते हतविधे-
रवाप्नोत्यस्तोकं सततमपि शोकं निजहृदि ॥

न ते मूलं स्थूलं न हि तव शरीरं दृढतरं
विशेषेणैवोपर्युपरि तव भागः कृशतरः ।
महीयानेवाहो तव शिरसि भारोऽपि तदपि
त्वया दीर्घायुष्यं क्रमुक कथमासादितमभूत् ॥

कलानाथेन त्वं वहसि समभावं स्वहृदये
पदार्थान्सर्वानप्ययि मुकुर गृह्णासि नचिरात् ।
नृणां द्रष्टव्येषु प्रथमगणनीयोऽसि भुवने
न जाने संभाव्यं तव परमितः कैरिव गुणैः ॥

कटत्तनाट्ट्. इ. के. श्रीरविवर्मराजः ।

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसंधेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥ ५८ ॥

इह बाह्योद्यानस्थितहरशिरश्चन्द्रिकया नित्यविकासभाजां कुमुदानामवस्थितिं भावयन्कविः कैलासशृङ्गाणां कुमुदसादृश्यं वर्णयति; कैलासं च त्रिदशवनितादर्पणत्वेनानुवर्णयन्, महीधरस्यास्य निरतिशयं सौभाग्यमवगमयति ॥

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यःकृत्तद्विरदरदनच्छेदगौरस्य तस्य ।
शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री-
मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ५९ ॥

कैलासस्य धवलिमानं सदृशवस्तुनिर्देशेन विशदयितुं प्रक्रान्तः कविः प्रथमं दर्पणेन तमुपमयन्, 'निःश्वासादिभिरनुक्षणं मलिनीभवन्नयं मुकुरः न समीचीनः' इति तमेव कुमुदैरनन्तरमुपमिमानः, तत्रापि नैमित्तिकं विकासमाकलय्यापरितुष्टः पुनर्गिरिशाट्टहासेन सदृशं भावयन्, तस्यापि कादाचित्कतामनुस्मरन् पद्येऽस्मिन्सद्यःकृत्तद्विरदरदनच्छेदेन सदृशयन्, तावताप्यसंतुष्टः, वर्णयितुमशक्यमद्रेः शोभा सहृदयैः स्तिमितनयनप्रेक्षणीयैवेत्युद्गिरन्,

तस्यैव गाम्भीर्यादिधर्मान्तराणि लक्षीकृत्य गौराङ्गेण हलभृतोपमिमीते — इत्यहो ! गाम्भीर्यमनितरसाधारणं महाकविभणितीनाम् ॥

हित्वा तस्मिन्भुजगवलयं शंभुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत्पादचारेण गौरी ।
भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी ॥ ६० ॥

भवान्या पूर्वमेव दृष्टभक्तिस्त्वं कैलासमद्य दिष्ट्याऽधिगतः पादचारेण विचरन्त्या गौर्याः कठिनशिलातलस्पर्शं चरणयोरसहमानः, आत्मनः शरीरं सोपानत्वेन परिणमयन् तस्या वात्सल्यमसृणितानां कटाक्षाणां पात्रीभवन्नात्मानं पवित्रीकुरु— इत्युपदिशन्, मृडान्याः सर्वात्मना दास्यमात्मन इहाविष्करोति भक्तिपरवशः कालिदासः ॥

तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ।
ताभ्यो मोक्षस्तव यदि सखे धर्मलब्धस्य न स्या-
त्क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भाययेथाः ॥ ६१ ॥

पूर्वं कदाचिदुज्जयिनीं गतस्त्वं महाकालस्य प्रदोषपूजासमये ते मन्द्रगर्जितं संध्याबलिपटहत्वेन परिणमयन् वनिताललामभूतानां वेश्यानां मधुकरश्रेणिदीर्घाणां कटाक्षाणां पात्रीभूय अविकलं फलं लब्धवान्किल । पश्यतु तावदिदानीमाद्यरसाभिभूतहृदयो भवान् 'कीदृशं फलं भवानीपरिचर्यायाः' इति । मृडानीचरणपङ्कज स्पर्शसमनन्तरमेव क्रीडालोलाभिः सुरयुवतिभिरहमहमिकया परि-

रुधः, अनितरसुलभान्भोगान्प्राप्नुवन्, ताभिः सप्रणयं सकौतुकं च सहैव गृहाभ्यन्तरं नीतो भविष्यसीत्यहो! महिमा भवानीसपर्यायाः । किं ज्योतिष्टोमादिभिरधिकायाससाध्यैः? किं वा नितान्तशोषितकरणग्रामेण तपसा? किमन्यैरपि संदिग्धफलैरुपासनैः? इति स्वाशयं प्रकटीकरोति महाकविः ॥

एवमतर्कितोपनतान्निरतिशयसुखलाभाद्विस्मृतान्यकर्तव्यस्य, मदनशरशरव्यतामुपयाताभिः त्वदीयच्छायोपगूढावयवाभिः सुरयुवतिभिरादरातिशयेनानुक्षणमुपलालितस्य भवतो हृदयादभ्युपपन्नं सुहृत्कार्यं नियतमपसरेदिति बिभेमि । तदङ्ग, किंचिदिव मदर्थे समालम्ब्य धृतिम्, संस्तभ्यात्मानम्, परित्यज्य तरलताम्, दूरीकृत्य देवकामिनीदाक्षिण्यम्, आश्रित्यानिच्छयापि नैष्ठुर्यम्, अभ्यस्य स्वरपरिवर्तनाम्, परुषीकृत्य निसर्गतः श्रवणशुभगान्यपि मन्द्रगर्जितानि, भाययित्वा च रमणीयमपि तरुणीसार्थम्, कथंकथंचिदात्मानं मोचयन्नलकाभिमुखो गच्छेत्यतिकरुणं प्रार्थयते यक्षः ॥

**हेमाम्भोजप्रसवि सलिलं मानसस्याददानः**

**कुर्वन्कामात्क्षणमुखपटप्रीतिमैरावतस्य ।**

**धुन्वन्कल्पद्रुमकिसलयान्यंशुकानि स्ववातै-**

**र्नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम् ॥ ६२ ॥**

सुरवनिताभ्य आत्मानं मोचयित्वा अलकाभिमुखं प्रस्थितवतस्ते मार्गे प्रथमं कनककमलभासुरमविज्ञातकालुष्यं मानसं सरोवरं नयनगोचरीभविष्यति इति वदन् यक्षः— इह निर्मलाम्भसि तोयक्रीडाव्यापृतमैरावतम्, कुबेरस्योद्यानमुच्छृङ्खलं प्रविष्टस्य तस्य चेष्टा-

त्वमदनुरागः, लोकान्तरगतस्यापि तेऽहमेव राक्षसी विनाशायोपजाता' इत्युन्मुक्तार्तनादा [illegible] । कपिञ्जलस्तु तथा कृतप्रलापां तां प्रत्यवादीत् 'गन्धर्वराजपुत्रि, कस्तवात्र दोषः ? यथा च शापदोषात् भवत्योर्द्वयोरपि दुःखं तथा मया कथितमेव चन्द्रमसोऽपि भर्त्रा भवतीभ्यां श्रुतमेव । तदुन्मुच्यतामयं शोकानुबन्धः । यदेवारब्धं तपस्तदेवानुबध्यताम्' इति । अथ कादम्बरी कपिञ्जलमवादीत् । भगवन्, पत्रलेखया त्वया चास्मिन् सरसि जलप्रवेशः कृतः । तत्किं तस्याः पत्रलेखायाः संवृत्तमिति । स तु प्रत्यवादीत् राजपुत्रि, सलिलपातानन्तरं न किंचिदपि तद्वृत्तान्तो मया ज्ञातः । तदधुना क्व चन्द्रापीडस्य क्व वैशम्पायनस्य जन्म ? किं वास्याः पत्रलेखायाः वृत्तम् ? इति सर्वस्यास्य वृत्तान्तस्यावगमनाय भगवतः श्वेतकेतोः पादमूलं गमिष्यामि' इत्यभिदधान एव गगनमुदपतत् । अथ कादम्बरी तामसंवदाहा चन्द्रापीडतनुं कस्मिंश्चित् शिलातले शनैः स्थापयित्वा स्नानशुचिर्भूत्वा देवतार्चनामपचितिं संपाद्य सकलेन परिजनेन सह निराहारा कालमक्षिपत् । अथ मदलेखा विदितवृत्तान्ताभ्यां पितृभ्याम् 'अवसितशापेन जामात्रा सहैव वत्सां द्रक्ष्यावः' इति सन्दिष्टा सा कादम्बरी निर्विकारवदनं चन्द्रापीडशरीरमेवाहर्निशमन्वपालयत् । अथ चन्द्रापीडश्चिरयतीत्युत्ताम्यन् देवस्तारापीडः तद्वार्तावबोधनाय वार्ताहरान् प्रेषयामास ॥

अथ प्रतिनिवृत्तेभ्यस्तेभ्यः सर्वमपि तं वृत्तान्तं यथावदश्रौषीत् । श्रुत्वा च विस्मयशोकाभ्यामाक्षिप्तहृदये तु शुकनासः प्रोवाच । देव, विचित्रेऽस्मिन् संसारे किं किं न संभाव्यते ? श्रूयन्ते च पुराणरामायणभारतादिष्वागमेषु बहुप्रकाराश्शापवार्ताः । तद्यथा — महेन्द्र-

पदवर्तिनो नहुषस्य राजर्षेरगस्त्यशापादजगरता । सौदासस्य च वसिष्ठसुतशापान्मानुषादत्त्वम् । असुरगुरुशापाच्च ययातेस्तारुण्य एव जरसा भङ्गः । त्रिशङ्कोश्च पितृशापाच्चण्डालभावः इत्यादि । श्रूयते च स्वर्गनिवासी महाभिषो नाम राजा अस्मिन् लोके शन्तनुरुत्पन्नः । तत्पत्नीत्वमुपगतायां गङ्गायां शापदोषादष्टानामपि वसूनामुत्पत्तिः । तिष्ठतु तावदन्ये । अयमादिदेवो भगवानज एव जमदग्नेरात्मजतामुपगतः, पुनश्चतुर्धात्मानं विभज्य राजर्षेर्दशरथस्य, तथैव मथुरायां वसुदेवस्य । तन्मनुष्येषु देवानामुत्पत्तिर्नैवासंभाविनी । अपि च गर्भारम्भसंभवे देवेन देव्या वदने विशंश्चन्द्रमा एव दृष्टः, तथा ममापि स्वप्ने पुण्डरीकस्य दर्शनं समुपजातम् । तदस्मिन् वस्तुनि न मनागपि देवेन शोकः कार्यः । इत्युक्तवति शुकनासे विस्मयान्तरितशोकावेगस्तारापीडः सद्य एव गमनसंविधानमकारयत् । प्रस्थितश्च तद्विस्मयालोकनकुतूहलिन्या गृहवर्जमुज्जयिन्यानुगम्यमानः कतिपयैरेव दिवसैर्महाश्वेताश्रममाससाद । महाश्वेता तु तदागमनमाकर्ण्य सरभसं धावित्वा ह्रिया गुहान्तरमविशत् ॥

कादम्बरी तु कथंचिद्विधृतप्रज्ञा लज्जावनम्रमुखी यथाक्रमं गुरुवन्दनमकरोत् । तत्र चन्द्रापीडशरीरसंदर्शनक्षुभितहृदयेषु तेषु पौरेषु सर्वतः प्रवृत्तरोदनशब्दं तत्तपोवनं शोकाधिष्ठानसदनमिवाभवत् । नरपतिस्तु वन्यां वृत्तिमेवावलम्ब्य सपरिवारस्समं देव्या शुकनासेन च तत्रैव तपोवनैकदेशे मृत्युंजयध्यानपरः कालमयापयत् । इत्युक्त्वा स भगवान् जाबालिः 'अहो कथारसस्य चित्ताक्षेपसामर्थ्यम् । यत्कथयितुं प्रवृत्तोऽस्मि तत्पत्न्यत्यैवानिदूरमतिक्रान्तोऽस्मि । यः कामोपहतचेताः स्वयंकृ-

तदेवाविनयात् दिव्यलोकतः परिभ्रष्टो मर्त्यलोके वैशम्पायननामा शुकनाससूनुरभवत् स एवैष पुनर्महाश्वेताशापेन शुकजातौ पतित इत्युक्त्वा विरराम ॥

इत्येवं वदत्येव भगवति जाबालौ सुप्तप्रबुद्धस्येव मे पूर्वजन्मोपार्जिताः सर्वा विद्या जिह्वाग्रे अस्फुरन् । मनुजस्येव चेयं विस्पष्टा भारती समुत्पन्ना । मनुष्यशरीरादेव स एव चन्द्रापीडस्योपरि स्नेहः स एव महाश्वेतायामनुरागः इति सर्वमपि जन्मान्तरीयं मद्धृदयमाविशत् । भगवान् जाबालिस्तु दिक्षु विक्षिपन् चक्षुः 'अहो प्रभातप्राया रजनी' इत्यभिदधान एव गोष्ठीं भङ्क्त्वोदतिष्ठत् । हारीतस्तु मां निजकरेणैवास्मत्पर्णशालां नीत्वा शनैः स्वशयनैकदेशे स्थापयित्वा प्राभातिकक्रियाकरणाय निर्ययौ । कपिञ्जलस्तु मम पितुः श्वेतकेतोः पादमूलादागत्य स्नानागतेन हारीतेन प्रवेशितः निर्निमेषेण चक्षुषा मां निरीक्ष्य करद्वयेनोत्क्षिप्य वक्षसि निवेश्य भूयसा मन्युवेगेन चिरमरोदीत् । तथा रुदन्तं तु तं दृष्ट्वाहमवदम् सखे कपिञ्जल, किं फलमनेन सकलक्लेशपरिभूते मयि दुरात्मनि स्नेहानुबन्धेन? त्वं पुनर्बालोऽपि न स्पृष्ट एवामीभिस्संसारदोषैः । समुपविश्य तावत्कथय यथावृत्तं सर्वम् । अपि कुशलं तातस्य । स्मरति वा माम् । मद्वृत्तान्तमाकर्ण्य किमुक्तवान्? कुपितो वा नवेति । सोऽब्रवीत् सखे, कुशलं तातस्य । अयं चास्मद्वृत्तान्तः प्रथममेव तातेन दिव्येन चक्षुषा दृष्टः । ततस्तुरगभावाद्विमुक्तो गतोऽस्मि तस्य पादमूलम् । दूरत एव स्थित्वा विषण्णदीनमानसं भयादनुपसर्पन्तं मामाहूयैवमाज्ञापितवान् । वत्स परित्यज्यतां स्वदोषशङ्का । बलवती हि भवितव्यता । शुकजातौ निदानीं मुहूर्तं पति-

तः । तद्गत्वापि तमद्य नैव वेत्सि। नाप्यसौ त्वां वेत्ति। मया तु वत्सस्यकृते समारब्धमायुष्करं कर्म । तदत्रैव कंचित्कालं स्थीयतामिति । ततस्तथेति तत्पादपरिचर्ययैव कंचनकालमनैषम् । अद्य प्रातरेव मामाहूयाज्ञापितवान्। वत्स कपिञ्जल महामुनेर्जाबालेराश्रमं सुहृत्ते प्राप्तः । जन्मान्तरस्मरणं चास्योपजातम्। तद्गच्छ संप्रति तं द्रष्टुम्। मदीयया चाशिषानुगृह्य वक्तव्योऽसौ । वत्स, यावदिदं कर्म परिसमाप्यते तावत्त्वयास्मिन्नेव जाबालेराश्रमे स्थातव्यमिति । इत्युक्त्वा कपिञ्जलः क्षणमिव स्थित्वा 'सखे, प्रतिपालय निदेशं तातस्य अहं तु समारब्धकर्मणः तस्यैव प्रत्यनन्तरीभवामीत्यभिदधान एवान्तरिक्षमतिक्रम्यादर्शनमगात् ॥

अथ हारीतेन प्रतिदिनमाहारादिभिरुपचारैः संवर्धितोऽहं कतिपयैरेव दिवसैः संजातपक्षोऽभवम् । उत्पन्नोत्पतनसामर्थ्यश्च चेतस्यकरवम् । 'गमनक्षमस्तु संवृत्तोऽस्मि । तत्किमुत्पन्नज्ञानोऽपि दयितजनविरहेणात्मानं क्लेशयामि ? । भवतु तत्रैव गत्वा तिष्ठामि, यत्र महाश्वेता आस्ते'। इति निश्चित्यैकदा प्रातर्विहारनिर्गत एव उत्तरां ककुभं गृहीत्वावहम्। अपरिचितगमनतया स्तोकमेव गत्वा शिथिलितपक्षतिः कस्यचित्तरोरग्रमवालम्बिषि । तत्रैव किञ्चिद्विश्रम्य पश्चाद्यास्यामीति तस्यैव तरोर्मूलभागमेवावतीर्य अध्वश्रमसुलभां निद्रामगच्छम । चिरादिव प्रबुद्धस्तन्तुपाशैर्बद्धमात्मानमलक्षयम्। अग्रतश्च क्रूराकृतिं पुरुषमेकमालोक्य तमपृच्छम्।'भद्र, कस्त्वम्? । किमर्थं वाहं बद्धोऽस्मीति । स तु मामुक्तवान् । महात्मन्, अहं खलु जात्या चण्डालः । मम खलु स्वामी पक्कणाधिपतिरितो नातिदूरे कृतावस्थानः । तस्य चैका दुहिता प्रथमे वयसि वर्तते ।

तस्यास्त्वं केनापि दुरात्मना कथितः, यथा जाबालेराश्रमे महाश्चर्यकारी शुकस्तिष्ठतीति । तच्छ्रुत्वा बहवो मादृशास्त्वद्ग्रहणाय तया समादिष्टाः । तदद्य पुण्यैर्मया त्वमासादितोऽसि । बन्धे मोक्षे चाधुना सैव प्रभवतीति । अहं तु तच्छ्रुत्वा चेतस्यकरवम् । अहो मे दारुणः कर्मविपाकः । येन मया जगत्त्रयेनमस्यस्य श्वेतकेतोः स्वहस्तसंवार्धितेन दिव्यलोकवासिना भूत्वा अधुना पक्कणमपि प्रवेष्टव्यम्, चाण्डालैस्सहैकत्र स्थातव्यम् । मातङ्गवृद्धाङ्गनाकरोपनीतैः कवलैरात्मा पोषणीयः । चण्डालबालजनस्य क्रीडनीयेन भवितव्यम् । इति चिन्तयन्तमेव मां नीत्वा स तस्यै चाण्डालदारिकायै समर्पितवान् । सा तु प्रहृष्टवदना शोभनं कृतमित्यभिधाय दारुपञ्जरे मामाक्षिप्यार्गलितद्वारा 'अत्रैव निर्वृतस्तिष्ठ' इति मामाबभाषे । अथ महासंकटे पतितोऽस्मीति निर्विण्णहृदयोऽहं मौनग्रहणं कृत्वा तदुपनीतेषु पानाशनादिषु निरपेक्ष एव कतिपयं कालमयापयम् । अस्मिन् प्रत्युषसि तु प्रबुद्धोऽहं कनकपञ्जरस्थितमात्मानमद्राक्षम् । सद्य एव मामादायैषा देवपादमूलमायाता । तत्कथं ? किमर्थं वाहं बद्धः ? किमर्थमिहानीतः ? इत्यत्र देव इवाहमपि अनपगतकुतूहल एव इति वैशम्पायनो विरराम ॥

राजा तु तच्छ्रुत्वा समुपजातात्यधिककुतूहलः चाण्डालकन्यकानयनाय पुरःस्थितां प्रतीहारीमादिदेश । अथ प्रविश्य सा राजानं बभाषे । भो भुवनभूषण, ताराग्मण, कादम्बरीलोचनानन्दकर, सर्वस्त्वयास्य दुर्मतेरात्मनश्च वृत्तान्तः श्रुत एव । अहमपि दुरात्मनोऽस्य जननी श्रीः । तथाभूतमेनं दृष्ट्वास्य पित्राहमादिष्टा 'देवि यावदिदं कर्म परिसमाप्यते तावदेनं मर्त्यलोके बद्धा धारय । यथा चास्यानुतापो भवति तथा विधीयताम्' इति । तदस्य विनयायेदं विनिर्मितं

मया । सर्वमधुना तत्कर्म परिसमाप्तम् । शापावसाने च युवयो-स्समसमेव सुखेन भवितव्यमिति मयायं त्वत्समीपमानीतः । अत्रापि च लोकसंपर्कपरिहाराय चाण्डालजातिः ख्यापिता । तदनुभवतां संप्रति द्वावपि दुःखबहुले तनू परित्यज्येष्टजनसमागमसुखम् । इत्यभिदधानैव क्षितेर्गगनमुदपतत् । शूद्रकोऽपि सपदि संस्मृतजन्मान्तरीयवृत्तान्तः वैशम्पायनेन सह सद्यः काष्ठीभूतं देहमहासीत् । अत्रान्तरे मधुमाससुलभेन मनसिजविकारेण पर्याकुलितहृदया कादम्बरी मायमेकान्ते चन्द्रापीडतनुं निर्भरं कण्ठे जग्राह। ततस्सद्य एव प्रत्यापन्नजीवितश्चन्द्रापीडः चक्षुरुन्मील्य सुप्तप्रतिबुद्ध इवोत्थाय कादम्बरीमवादीत् । 'भीरु, परित्यज्यतां भयम् । प्रत्युज्जीवितोऽस्मि तवैवामुना कण्ठग्रहेण । अद्यैव निवृत्तशापेन मया परित्यक्ता सा शूद्रकाख्या तनुः' इत्यभिदधत्येव चन्द्रावतारे चन्द्रापीडे पुण्डरीकोऽपि कपिञ्जलकरावलम्बी गगनादवततार ॥

दृष्ट्वा च तं प्रियसखीदयितं कादम्बरी स्वयमेव धावित्वा दत्तकण्ठग्रहा महाश्वेतायै प्रादर्शयत् । मृत्युंजयजपव्यग्रस्तारापीडोऽपि मदलेखानिवेदितवृत्तान्तः सह विलासवत्या सरभससमागत्य पादयोः पतितं चन्द्रापीडं गाढमालिलिङ्ग । तदानीमेव कपिञ्जलस्समुपसृत्य शुकनासमवादीत् । एवं सन्दिष्टमार्यस्य भगवता श्वेतकेतुना । 'अयं खलु पुण्डरीको मया संवर्धितः तवाप्यात्मजः । तद्वैशम्पायन एवायमित्यवगत्याविनयेभ्यो निवारणीयः । परोऽयमिति कृत्वा नोपेक्षणीयः इति । शुकनासोऽपि तमादेशं शिरसा प्रतिजग्राह । अथापरेद्युः प्रभाते केयूरकनिवेदितवृत्तान्तौ चित्ररथहंसौ सह मदिरागौरीभ्यां तत्रैवाजग्मतुः । परस्परं मिलितानां सविस्मयसंवादानां तेषां निरवधिको महोत्सवः प्रावर्तत ।

अथ ते हेमकूटं गत्वा यथाविधि दंपत्योरुभयोः विवाहक्रियां निरव-र्तयन् । एकदा कादम्बरी चन्द्रापीडं रहस्यप्राक्षीत् । आर्यपुत्र मवं वयं मृताः पुनर्जीविताः संगताश्च । सा पुनर्वराकी पत्रलेखा कथं-भूतेति । सोऽपि प्रत्यवादीत् । सा हि रोहिणी शप्तं मामुपश्रुत्य मत्परिचर्यायै मर्त्यलोकमवातारीत् । जन्मान्तरं गच्छता मया पुन-रात्मलोकं विसर्जितेति । अथ चन्द्रापीडो हेमकूट एव कतिपयदि-वसगणं नीत्वा कादम्बरीपुण्डरीकमहाश्वेताभिः सममुज्जयिनीमागत्य राज्येऽभिषिक्तः पुण्डरीकनिवेशितसमस्तराज्यभारः कादम्बरीलोच-नानन्दकरः परां कोटिमानन्दस्याध्यगच्छत् ॥

चन्द्रापीडचरितं समाप्तम् ॥

---

॥ श्रीः ॥

# ॥ प्रेमानन्दभारती ॥

विदितमेव किल निखिललोकवृत्तान्तप्रकाशकपत्रिकादत्तावधा-नानां सहृदयापठितॄणाम् ; यदिदानीं चेन्नपुर्यां वङ्गदेशीयाः प्रेमा-नन्दभारतीसमाख्याः केचन यतिवर्याः स्वाश्रमोचितं निवृत्तिमार्ग-मप्रहायैव निखिलसात्त्विकजनोपकाराय कतिपयदिनानि यावत् विद्व-ज्जनगरिष्ठेषु समाजेषु भक्तिप्रभृतीन् वेदान्तिसंमतान् विषयानधिकृत्य निरर्गलप्रसरया आङ्गलभाषानिबद्धया वाग्धोरण्या श्रुतिमधुरानुपन्या-सान् वितन्वन्तीति । ते हि स्वकीया आ जन्मनः प्रवृत्ताः भगवति वासुदेवे चात्मनः परां भक्तिं दैनंदिनपत्रिकासु हिन्दूप्रभृतिषु यथा-

त्सरमनभिज्ञप्रतिबोधनाय प्राचीकशन् । यासु विशदमुपलभामहे तेषां नवे वयसि वर्तमानानामेवान्यादृशमाङ्गलभाषाप्रावीण्यम्, पत्रिकाप्रकटनोत्साहम्, सति च धनागमे कुतोऽपि कारणान्निस्पृहत्वम्, तत्त्वान्वेषणाय गुरूपसदनम्, विरक्तिप्राचुर्येण तुरीयाश्रमाङ्गीकारम्, कृष्णैकमनस्कतया अनवरतं तल्लीलानुसंधानम्, क्रमशश्च मुनिजनैकलभ्यं भावनाप्रकर्षपरिणामभूतं भगवत्साक्षात्कारम्, एवंविधमन्यच्च विशुद्धमपदानम् ॥

अमी चामेरिकाख्ये विस्तीर्णे पाश्चात्यभूखण्डे केवलमष्टापदसंचयव्यग्रान्, तत्रत्यान्, अध्यात्मज्ञानविमुखान् जनान् इन्द्रियार्थानुसेवनैकप्रवणमानसान् अवेक्ष्य विदीर्णहृदयाः कृच्छ्रादेतेषां मनांसि विषयेभ्यो निवर्त्य महत्या करुणया आत्मनित्यतादि भारतीयं सार्वजनीनं तत्वजातमुपादिक्षन् । पश्चाच्च साभिलाषं सङ्घशः समापतत्सु श्रोतृजनेषु भगवद्गुणमाध्वीकधारामनवरतं ववृषुः ॥

तस्मिंश्च भुवो भागे कुत्रचित् प्रधाननगरे गोपिकानन्दनस्यालयं कंचन व्यरचयन् । अनन्तरं तद्देशीयाभिः कतिपयमहिलाभिः अध्यात्मोपदेशवशीकृताभिः अनुगताः द्वित्रसंवत्सरेभ्यः पूर्वमिमं भारतं वर्षं प्रत्याजग्मुः । तैः सह महानावमारुह्येमं देशमागच्छन्ती भक्तिपरवशा काचित् शिष्या इदानीं शोचनीयां दशामापन्नायाः भारतभूमेरभ्युदयपरम्परामाशंसमाना, आचार्यमनोऽनुसारि, शब्दसौष्ठवेनार्थपौष्कल्येन च निरुपमम्, अचिन्तितोपस्थितम्, सिद्धोपदेशवत् परमाह्लादनम्, गुणोत्तरं किमपि रत्नसप्तकमिव गाथासप्तकमाङ्गलभाषया ग्रथितं देवताविष्टेवावशमगासीत् । यदिदं पद्यसप्तकं

भारतीयगाथानाम्ना प्रथितं वर्तते। यस्य चानुवादः सकौतुकं सावधानं चास्माभिर्गीर्वाण्या विरचितोऽत्र प्रकाश्यते॥

एवं प्रथितप्रभावा यतयः सांप्रतं मयूरपुरीनामके मद्रपुरीशाखानगरे, गुणग्राहिभिः, आस्तिकप्रियैः, अत्युदारस्वभावैः श्रीमद्भिः कृष्णस्वाम्यार्यवर्यैः स्वीये सदने सादरमाराधिताः विराजन्ते॥

तैश्च सादरमनुमोदितं प्रियशिष्यामुखात् स्वयमेव निर्गलित गाथासप्तकमिदम् अङ्गलवाण्यनभिज्ञानां सहृदयानामनुरञ्जनाय यथाशक्ति देवभाषया छन्दोमय्या अनूद्यते—

## भारतीयगाथासप्तकम्॥

---

जय जय पुराणवसुधे!
भारति! पुण्यप्रथे! मम जनित्रि!।
शिक्षय मां निजविभवं
सुकृतैः प्राप्याऽसि जीवितं च भुवः॥ १॥

बुधजनपदाङ्कपूता
मुनिभिः सिद्धैश्च गीतचरिता त्वम्।
जय भारति! तव महिमा
प्राक्तन उज्जृम्भतेऽद्य महनीयः॥ २॥

दिक्षु विदिक्षु च चरतः
त्वमसि ममाम्ब! प्रियं परं धाम।
तव मरुतामनुभावः
कर्षति मां त्वद्भुवां च माधुर्यम्॥ ३॥

जागृत भारतजनुषः !
गायत चोच्चैर्यशांसि भारत्याः ।
ननु जाग्रति ते धर्माः
यैरेषा नूत्नमुच्छ्रयं भजते ॥ ४ ॥

अथ नः पावनमधुरं
शान्तिवचो भवतु सर्वदा शरणम् ।
शान्तिर्व्यपोह्य विघ्नान्
निर्वैरं दिवसमानयेद्विमलम् ॥ ५ ॥

औन्नत्यं जानपदं
दृष्टं पतयालु सुस्थिरा तु त्वम् ।
चिरमेवं भव नित्ये !
त्वामायान्त्वाशिषो दिव्याः ॥ ६ ॥

खिन्ना विपक्षमरुता
धीरा भाव्यं प्रतीक्षसे प्रशमम् ।
तव दायं जगदवनं
भव देव्यनिशं तमोऽपहा जगताम् ॥ ७ ॥

इति भारतीयगाथा-
सप्तकमनुवाच्य भाषया दैव्या ।
अर्पयति निर्भरोऽयं
कविरच्युतपादयोः स्वकृतिं ॥ ८ ॥

इति सहृदयसमुदायदासः

चेन्नपुरी माघमास्नः

**राजगोपालाचार्यः,**
राजकीय न्यायविद्याशालाध्यापकः ।

## श्रीकृष्णलीलायितम् ॥

भ्रातः! कन्या ह्येषा प्रसूता। किमनया कस्यापि वैशसं भवि-
ष्यति? एकमपि स्त्र्यपत्यमवशिष्यतां मे। जन्मनैव हता परवर्ती
किमिति भूयो धानिष्यते स्त्रीप्रसूति।' इत्यादि सोपग्रहमसकृद्या-
याचमानामपि स्वसारं स्वामविगणय्य तामपि दारिकां पूर्ववत्
पादयोरादाय तस्यामेव वध्यशिलायामधोमुखं व्यपोथयत् ॥

अथ सा तस्य हस्तग्रहपरिच्युता तत्क्षणगतामाद्य तां शिलामु-
त्पतिता गगनतले भुजाष्टकोद्यतशङ्खचक्रगदाशूलशरशरासनखड्गखे-
टकप्रभापटलपुनरुक्तव्योमनीलिमरूपम्, अकालोद्गतबालार्कशतविभ्रम-
करमहामणिगणप्रत्युप्तप्रत्यग्रकनककिरीटकुण्डलप्रभापरिवेषपरिक्षिप्तव-
दनचन्द्रमण्डलम्, चन्द्रांशुसूत्रग्रथिततारकश्रेणीसंकाशतारहारप्रभानु-
लिप्तपयोधरोत्सेधम्, वलयाङ्गदाङ्गुलीयकमणिकिरणकिसलयितबाहुल-
तम्, अनेकवर्णरत्नचित्रितमेखलादामनियमितपीताम्बरपरिधानालंकृत-
नितम्बबिम्बम्, नीलकौशेयकृतोत्तरासङ्गम्, विक्षिप्तक्षणप्रभाप्रसरस्ये-
न्द्रायुधचुम्बिनो नवाम्बुदस्यानुकुर्वाणम्, लीलालोलनूपुरमरालाध्यासि-
तचरणकमलम्, दिव्यरूपमनुदर्शयन्ती, परितः सेवाव्यग्रनिभृतकर-
णग्रामया अभिष्टूयमाना सुरपरिषदा कंसमाभाष्योवाच— 'अरे!
दुरात्मन्! दैवहत! पापाचार! यमनुचिन्त्य मामेवं संत्रासमुषितदृष्टि-
र्हन्तुमारब्धोऽसि स ते शत्रुः प्राणहरो गुहागत इव केसरी क्वचिद-
लक्षितो भवादृशां वितथदृशां स्वैरं विवर्धते। तेन चावस्कन्द्य गृहीतस्य
मुमूर्षतो वृथा विस्तृतं वक्षःकपाटं ते विपाट्य नखशिखरैः प्रत्यग्र-
कदुष्णस्रवदसृगासवपानगोष्ठीरसं न हास्यामि' इति ॥

तथाचानुशिष्यान्तर्हितायां सह त्रिदशपरिषदा योगमायायां दैवविसंवादितेन निजेन पुरुषाकारेणानुशयानो नितान्तक्रीडाभरविध्वस्ततेजाः कृतापराधः स्वसुः पादपतितः प्रसादयन् निसर्गसरलहृदयया देवकनन्दन्या— 'भ्रातः! माव्यथिष्ठाः । कस्तवापराधः? दैवं हि परोक्षचरितं स्वैर्दोषै. दूषितं दर्शयति पुरुषम् । यदुत तथा नाम मयि वत्सलो दृष्टपूर्व इदानीमप्येवं प्रवणस्त्वमेव मे दारकानाविष्ट इव दुष्टग्रहेणाहिंसीः । तत्कथमन्तरेण दैवदुर्ललितं संभाव्यते । मृत्युना प्रथमाघ्रातं पश्चादेव हि जिघ्रन्ति व्याधिशस्त्रप्रभृतीनि । मुधापवादाय यः क्रियाविषयमुपहरति कर्तारं च प्रहिणोति । तं हि परोक्षवृत्तिं विधातारमनवधारयन् लोकोऽयमन्यथा चान्यथा च विभ्राम्यति'— इत्येवमादिक्षमासारं विवेकविमलं सौभ्रात्रपेशलं च समाश्वासितः तथैव वसुदेवेनाप्यनुदर्शितोऽप्यात्मदोषदूषिताशय एव न किंचित् प्रतिब्रुवन् ध्यानावनतशिरा विवेश निवेशनम् ॥

गोकुले च निस्तीर्णधूमनिद्रा यशोदा तमात्मीयमेव पुत्रं मन्यमाना निर्भरतनयवात्सल्यपरवशा महोत्सवमनुबभूव । प्रथमप्रसूता च रोहिणी समग्रेन्दुमण्डलविमलकान्तिना संकर्षणेनात्मजेन महतीं प्रीतिं जग्राह । नन्दोऽपि शारदप्रावृषेण्यपयोवाहाभ्यामिव सहदर्शितोदयाभ्यां कुमाराभ्यां सर्वश्रेयसामुपरिस्थितमज्ञासीदात्मानम् ॥

कंसस्तु तेन योगनिद्रावागङ्कुशेन गाढविद्धो मर्मणि द्विरद इव जातमस्तकव्यथस्तमनिद्र एव अतिवाह्य क्षपाशेषं प्रत्यूषे सह सचिवैरात्मनीनैः समेत्य सर्वशो जानपदग्रामव्रजाकरेष्वनिर्दशानां निर्दशानां वा शिशूनां व्यापादनमेव पूर्वकृत्यं संमन्त्र्य मायाविदः शूरान् कामरूपानादिदेश निशाचरान्— 'सर्वैरिहास्मत्सुहृद्भिः इद-

मेकं चेतश्शल्यमुद्धर्तुं धूनादरैरनेकधा तत्र तत्र प्रवर्तितव्यम् । स हि गूढाचारो मायाशीलो विष्णुरन्यथा चान्यथा च निदर्शयन् स्वैरमन्यथैव स्वार्थं समर्थयते। न च तस्येदमित्थंभावयोः किंचिदस्त्यवगमसाधनम् । सर्वसंहारे तु प्रवृत्ते सोऽप्यन्तः पतन्नमुच्यते इदमेव च तत् यदाहुः 'दैवं पुरुषकारेण प्रतिहन्यते' इति । तदेष भवतां स्वामिप्रणयिताया पुरुषमानितायाश्च प्रदर्शनकालः । सर्वथाचास्मच्छ्रेयसि रतानामयमेक एव क्रियापरिशेष इति आत्मनैव च हिंसाव्यसनिनः प्रभोरपि निदेशेन प्रगुणीकृतपापाभिसन्धयस्ते पूतनाकेशिधेनुकशकटप्रमुखा अहंप्रथमिकया स्वाम्यर्थं मिषाधयिषन्तः प्रतस्थिरे ॥

अथ तत्र पूतना निशाचरी कामरूपिणी कमनीयेन धात्रीवपुषा ग्रामखर्वटनगराणि विचरन्ती कदाचिद्व्रजमासाद्य नन्दमन्दिरमवगाह्य प्रसुप्तजने निशीथे सोपग्रहमुपलालयन्तीव यशोदा नन्दनमङ्कनादाय विषदिग्धं स्तनमपाययत । तस्मिंस्तु विषधरराजपर्यङ्कनिश्शङ्कयोगनिद्रारसप्रसङ्गोपपादितजगत्सर्गस्थितिप्रतिसर्गव्यापारे कथं क्रमते विषस्य तेजः? । गृहीतमात्रे तु तेन पयोधरे परासुः पपात पूतना । चित्रं नन्दनन्दनेन निपीतं विषम्, पूतना तु प्राणैर्वियुयुजे इति ॥

अथवा कल्पावसानेषु यस्य संकर्षणात्मनो निश्वासक्ष्वेलावलीढमशेषं त्रिभुवनं भस्मसाद्भवति किं तस्य बाह्या विषपरमाणवः करिष्यन्ति ? ॥

तदनु शिशुक्रन्दितश्रवणव्यपोढनिद्रा यशोदादयो गोपिका नन्दादयश्च गोपास्तथाविधामुत्तानपतितां गण्डशैलकरालाकारामालोक्य राक्षसीमर्भकं च क्रीडन्तं किमिदमिति संभ्रमभ्रान्तदृष्टयः क्षणं

तूष्णीमतिष्ठन् । नन्दस्तु कुशलमतिश्चिरेण कंसधात्रीं तामभिज्ञानै-रभिजानन्नुपस्थितं कंसभयमवधार्य नित्यशङ्कितः कुमारपरिरक्षणे दत्तावधानो बभूव ॥

अन्यदा च यशोदा घोषसमुदाचारेण सुखप्रसुप्तमर्भकमन्यतम-स्य शकटस्याधस्तादाधाय यमुनां सिष्णासिषुरयासीत् । प्रत्यायाता च भग्नाक्षमुद्रुगणघटमुत्क्षिप्तैकचक्रमपविद्धं शकटं निजमार्गदत्तोद्धाप्प-लोचनं वक्त्राभ्यन्तरनिवेशिताङ्गुष्ठं च तनयमालक्षयन्ती हाहेत्यावेग-व्यग्राक्षरं विक्रोशन्ती सरभसं सुतमाददे । श्रुत्वा च रभसोपयातः पश्यन् नन्दः कथमिदं नः परावृत्तम्? केनेदं चेष्टितमिति तत्र स्थितान् गोपकुमारकान् पप्रच्छ । अस्यैव बालकस्य विधूतपाणिपादं रुदतः पादाग्रस्पर्शव्याविद्धं विध्वस्तमेतदिति निवेदितार्थः तैर्भय-विस्मयचित्रीकृतचित्तवृत्तिः कुमाररक्षाव्यसनितया जपहोमादीनि मङ्गलान्युपपादयामास ॥

अथान्यदा रूक्षैः शर्करापरिक्षेपैः प्रतोदैरिव प्रतुदन्नङ्गानि नी-रन्ध्ररजोवर्षमुषितदृष्टिः विजृम्भमाणसन्तमसविलुप्तदिग्विवेकः प्रववौ महावातः । तत्रान्तरे यशोदा निजोत्सङ्गविधृतमकस्माद्दुर्भरमिव सं-जातमर्भकमवनिपृष्ठे कथंचिदवरोप्यात्याहितं शङ्कमाना मङ्गलानुध्या-नाय क्षणमीलिताक्षी चक्षुरुन्मील्य पश्यन्ती न ददर्श क्वचिदपि तन-यम् । महति निमग्ना शोकार्णवे स्वमात्मानमप्यचेतयमाना मोहाव-रुद्धसर्वेन्द्रियवृत्तिः अन्तरिक्षाच्छिलातले परिभ्रष्टमवपातवेगशिथिलि तावयवग्रन्थिमतिभीषणमासुरं रूपं, तस्य च कण्ठलग्नं स्वमात्मजम्

(क्रमशः)

॥ श्रीः ॥

# श्रीमद्ग्रन्थत्रयभाष्योपात्तप्रमाणग्रन्थानां नामानि तत्तत्संकेताक्षराणि च ॥

| संकेताक्षराणि | ग्रन्थनामानि | संकेताक्षराणि | ग्रन्थनामानि |
|---|---|---|---|
| अष्ट | अष्टश्लोकी | धातु | धातुपाठः |
| अष्टा | अष्टाध्यायी | नाम | नामलिङ्गानुशासनम् |
| अहि | अहिर्बुध्न्यसंहिता | नित्य | नित्यग्रन्थः |
| आप | आपस्तम्बधर्मसूत्रम् | निरु | निरुक्तम् |
| इ-स | इतिहाससमुच्चयः | नी-सू | नीलासूक्तम् |
| ईश्व | ईश्वरसंहिता | न्याय | न्यायतत्त्वम् |
| क-व | कठवल्ली | पर | परमसंहिता |
| काश्य | काश्यपसंहिता | पाञ्च | पाञ्चरात्रम् |
| कौषी | कौषीतकोपनिषत् | पौष्क | पौष्करसंहिता |
| ग-श्रु-प्र | गद्यश्रुतप्रकाशिका | बृह | बृहदारण्यकम् |
| गी-भा | गीताभाष्यम् | ब्रा-पु | ब्राह्मपुराणम् |
| गी-स | गीतार्थसंग्रहः | ब्रह्म | ब्रह्मकैवर्तम् |
| चतु | चतुःश्लोकी | भ-गी | भगवद्गीता |
| छा | छान्दोग्यम् | भरत | भरतलक्षणवाक्यम् |
| जित | जितंतेस्तोत्रम् | भ-स्मृ | भरद्वाजस्मृतिः |
| तल | तलवकारोपनिषत् | भाग | श्रीभागवतम् |
| तै | तैत्तरीयम् | मनु | मनुस्मृतिः |

+ बहुत्र प्राचुर्यानुरोधेन कुम्भघोणमुद्रिते श्रीमद्रामायण श्रीमन्महाभारतपुस्तके, बम्बायिनगरमुद्रित श्रीविष्णुपुराणपुस्तके चानुसृत्यात्र आकरो निर्दिश्यते ॥

| संकेताक्षराणि | ग्रन्थनामानि | संकेताक्षराणि | ग्रन्थनामानि |
|---|---|---|---|
| मन्त्र | मन्त्रविशेषः | शैव | शैवपुराणम् |
| महा | महाभारतम् | शौन | शौनकसंहिता |
| महो | महोपनिषत् | श्रीगुण | श्रीगुणरत्नकोशः |
| मुक्त | मुक्तकवाक्यम् | श्रीभा | श्रीभाष्यम् |
| मुण्ड | मुण्डकोपनिषत् | श्रीरं | श्रीरङ्गराजस्तवः |
| मैत्रा | मैत्रायणीयोपनिषत् | श्रीवैकु | श्रीवैकुण्ठस्तवः |
| यास्क | यास्कनिरुक्तम् | श्रीसू | श्रीसूक्तम् |
| रह | रहस्याम्नायब्राह्मणम् | श्रीस्त | श्रीस्तवः |
| रा | रामायणम् | श्वेता | श्वेताश्वतरोपनिषत् |
| ल-त | लक्ष्मीतन्त्रसंहिता | षड | षडर्थसंक्षेपः |
| वरद | वरदराजस्तवः | सन | सनत्कुमारसंहिता |
| व-पु | वराहपुराणम् | संवि | संवित्सिद्धिः |
| वा-पु | वामनपुराणम् | सात्व | सात्वतसंहिता |
| वि-त | विष्णुतत्वसहिता | सुबा | सुबालोपनिषत् |
| वि-ध | विष्णुधर्मः | स्तोत्र | स्तोत्ररत्नम् |
| वि-पु | विष्णुपुराणम् | स्वायं | स्वायंभुववचनम् |
| वे-सं | वेदार्थसंग्रहः | हनु | हनुमन्नाटकम् |
| शारी | शारीरकसूत्रम् | | |



॥ श्रीः ॥

## प्रकरणसंकेताक्षराणि ॥

| संकेताक्षराणि | ग्रन्थनामानि | संकेताक्षराणि | ग्रन्थनामानि |
|---|---|---|---|
| अयो | अयोध्याकाण्डः | कि | किष्किन्धाकाण्डः |
| अरु | अरुणशाखा | बा | बालकाण्डः |
| आदि | आदिपर्व | ब्रा | ब्राह्मणम् |
| आन | आनन्दवल्ली | भी | भीष्मपर्व |
| आनु | आनुशासनिकपर्व | भृ | भृगुवल्ली |
| आर | आरण्यकाण्डः | मोक्ष | मोक्षधर्मः |
| आश्व | आश्वमेधिकपर्व | यु | युद्धकाण्डः |
| उ-श | उत्तरशतकम् | ल-स | लक्ष्मीसहस्रनाम |
| उत्त | उत्तरकाण्डः | वन | वनपर्व |
| उद्यो | उद्योगपर्व | शा | शान्तिपर्व |
| उप | उपनिषत् | शी | शीक्षावल्ली |
| कर्ण | कर्णपर्व | सह | सहस्रनामाध्यायः |
| क-शा | कठशाखा | सु | सुन्दरकाण्डः |



॥ श्रीः ॥

# श्रीमद्रहस्यत्रयभाष्योपात्तानां प्रमाणानाम् आकरप्रदर्शिका ॥

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।

सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. २.] सौम्यवर्षे फाल्गुनमासः । [संचि. १२.

## सुभाषितानि ।

---

अर्थाहरणकौशल्यं किं स्तुमः शास्त्रवादिनाम् ।

अव्ययेभ्योऽपि ये चार्थान्निष्कर्षन्ति सहस्रशः ॥ १ ॥

अर्थान्केचिदुपासते कृपणवत्केचित्त्वलंकुर्वते

वेश्यावत्खलु धातुवादिन इवोद्बध्नन्ति केचिद्रसान् ।

अर्थालंकृतिसद्रसद्रवमुचां वाचां प्रशस्तिस्पृशां

कर्तारः कवयो भवन्ति कतिचित्पुण्यैरगण्यैरिह ॥ २ ॥

मन्दं निक्षिपते पदानि परितः शब्दं समुद्वीक्षते

नानार्थाहरणं च काङ्क्षति मुदाऽलंकारमाकर्षति ।

आदत्ते सकलं सुवर्णनिचयं धत्ते रसान्तर्गतं

दोषान्वेषणतत्परो विजयते चोरोपमः सत्कविः ॥ ३ ॥

॥ श्रीः ॥

# ॥ वत्सरान्ते विज्ञप्तिः ॥



आर्या ग्राहकमहाशयाः,

अद्य संपूर्णोऽयं सौम्यः संवत्सरः; सहृदयायाश्च सुवर्णवृत्तरमोज्वलायाश्चतुर्दशो हायनः। महदिदं प्रमोदस्थानमस्माकमेनां प्रियां तनूजामिव बहिरवतारयताम्—यदियं भिन्नभिन्नाभिरुचिमद्भिः सुजनैरनेकैरधिष्ठितं पतिकुलमिव महीमण्डलमिदं प्रविशन्ती तत्तदभिमतैर्गुणैस्तांस्तानावर्जयन्ती प्रायेण निर्दोषा अनितरसुलभेन सौभाग्येन विलसतीति।

तथा हि— रम्यार्थोक्तितनूज्ज्वलेयं साहित्यामृताम्बुधेरमूल्यानि रत्नान्युद्धृत्य विश्वाग्विकिरतीति रसिकाः, महाकविफणितिष्वान्तरं रसमशेषतो व्यञ्जयतीति काव्यज्ञाः, आदिकाव्येऽप्यनिरूपितां कथां कर्णामृतं वर्षतीत्याख्यानविदः, रमणीयमश्रुतपूर्वं स्थावरसूक्ष्मतत्वं सरसया वृत्त्या निपुणमुपदिशतीति नवीना दार्शनिकाः असंस्कृतमतीनामविज्ञातसमयाचारपद्धतीनां निरपराधमधुरवयसि वर्तमानानां मनांसि उपदेशसूक्तिमालाभिः साधुसेविते मार्गे प्रवर्तयतीत्यास्तिकाः, भगवति परे ब्रह्मणि वासुदेवे निरतिशयां भक्तिमुपजनयतः प्राचीनाचार्यप्रणीतान्ग्रन्थान् बहिरवतारयतीति वेदान्तिनः, भारतं वर्षमिदं पूर्वमनुशिष्टवतां प्रख्यातगुणगणानां केषांचित्सार्वभौमानां जीवनवृत्तान्तं सोपपत्ति-

क्रममवधारयन्तीति पुराणवृत्तविचक्षणाः, महामहिमशालिनां भगवद्गुण-
परायणानां देवर्षिप्रवराणामन्यादृशं माहात्म्यमन्तरान्तरानुसंधा-
पयन्तीति पौराणिकाः, कलहोपजीविनः कुशाग्रमतयोऽपि स्वीयान-
वधानेनोपहासास्पदं भवन्तीत्यादिभिर्मधुरोपन्यासैः समयोचितै-
श्चमत्करोति परिषदमिति लोकतन्त्रनिष्णाताः, देशान्तरीयसम-
याचारादिकं मधुरमवबोधयन्तीति देशोदन्तलेखनकुशलाः, अनु-
दिवसमन्नजातैरापूर्यमाणं उदरगह्वरं कथमाहारो जीर्यतीत्यादि
गहनं शरीरतत्त्वमनुशिक्षयन्तीत्यायुर्वेदविदः, तिर्यग्योनिजातेभ्य
पशुभ्योऽपि केचन विषयाः संग्राह्याः सूक्ष्मदर्शिभिरिति सूच-
यन्तीति निरहंकारिणः, नानाद्वीपगतानां महिलानां स्वभावं तरतम-
भावं सम्यगुपदिशन्तीति अङ्गनासमाजः, अप्राकृतांशशोः श्रीमद्य-
दुनाथस्य गोलोकादिहावतरणादिबालकेलिकथां स्वादुमाध्वीकादि-
रप्ययैवास्वादनीयया वाक्सरण्यानुवर्णयन्तीति भावुकाः, बोधिसत्त्व-
मतानुयायिभिः तीर्थकरैर्विचारितं निर्वाणस्वरूपं संक्षेपतो विशद-
यन्तीति अभिज्ञाः तत्त्वविमर्शकाः, चक्रवर्तिनो गुणानुद्गिरन्तो राज्ञि
दृढमनुरागं वर्धयन्तीति राजकीयाः, श्रीमद्भट्टबाणसूक्तिसुधार्णवत-
रणोपायमजानतामक्षराभ्यासानामुपकाराय तदीयैरेव वचोभिः कां-
चिद्रमणीयां गमनिकां प्रदर्शयन्तीति पाठप्रवचनपराः पण्डिताश्चै-
नां बहुमानयन्ति ॥

स्वसुखनिरभिलाषा चैषा कामरूपिणी योगमहिम्नेव तत्र
तत्र स्मरणमात्रकृतसंनिधाना सममेव महीमण्डलमखिलं व्याप्नुवा-
ना, विलासमयामिव ज्ञानमयामिव सुखमयामिव धर्ममयामिव भक्ति-
मयामिव रसमयामिव ध्यानमयामिवानन्दमयामिव जीवलोकं कुर्वाणा

सारस्वतमप्रतिमं रसायनमनाराधितप्रसन्ना स्वयं पाययति सहृदयान् ।

प्रसादसुमुखीमेनाममकृन्निर्वर्णयन्त: पण्डिता: जनपदेष्वेकस्मिन्कोणे स्वयं निवसन्तोऽपि नानादेशोदन्तं देवभाषाभ्युदयप्रकारं च करतलामलकवदधिगच्छन्ति ।

रसमयप्राणा गुणोल्लासिनीयं सहृदया 'त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते' इति महाकविसूक्तिं स्मारयन्तीव, त्रिदशवाणीप्रचुराया आत्मनोऽपि त्रिदशत्वं सूचयन्तीव, स्वयं रूप्यत्रितयहार्या, अनुसंवत्सरमधिकाधिकैर्ग्राहकै: संभाव्यमाना, समादृता राजभिरभिज्ञै:, पूज्यमाना द्विजातिवर्यै: मान्यमाना महनीयचरितै:, अर्च्यमाना चार्चनीयै: विजयतेतराम् ।

अस्याश्च प्रचारणे समुचितोपन्यासलेखनेन द्रविणप्रदानेन च माहाय्यं कृतवतां श्रीमत्केरलवर्मदेवप्रभृतीनां पण्डितसार्वभौमानाम्, महीशूरस्यानन्दूरमण्डलाधिपमुख्यानां महाराजानां नितरां कार्तज्ञ्यं वहाम: ।

दृढे रमणीये च पत्रे स्फुटं मुद्रापयित्वा अस्या: निरुपमां सुषमामापादयित्रे श्रीरङ्गदिव्यनगरस्थश्रीवाणीविलासमुद्रायन्त्रालयाधिपतये गैर्वाणीमयजीविताय परार्थैकफलप्रवृत्तिमते अत्युदारस्वभावाय श्रीमद्वालसुब्रह्मण्यार्याय निरतिशयामभ्युदयपरंपरामाशंसामहे ॥

संपादक: ।

---

वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा
हैमैः स्फीता कमलमुकुलैर्दीर्घवैडूर्यनालैः ।
यस्यास्तीरे कृतवसतयो मानसं संनिकृष्टं
न ध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥

प्रेयस्याः हेमकुंभस्तननिःसृतैः पयोभिः संवर्धितस्य मन्दारपोतस्य प्रस्तावेन, पयसामादानाय मरकतशिलाबद्धसोपानमार्गा कनककमलभासुरां रमणीयां वापीमवतरन्तीनां कटीतटनिवेशितकनककुम्भानां मरालगमनानामितस्ततो विचरन्तीनां गतिवैचित्र्यदर्शनेनावर्जितस्वान्ता तीरे कृतवसतयो हंसा विस्मृत्य मानसावासमुखम्, अविगणय्य च त्वयि शात्रवभावम्, बाह्यकरणव्यापाररोधिनं सान्द्रमानन्दमनुभवन्तीति वर्णयन् यक्षः, तादृश्याः वाप्यास्तीरं दैवयोगेन नीताः विलासिजनाः तमेवोद्देशं बहुमन्यन्ते, तत्रैव सर्वोत्कर्षबुद्धिं कुर्वन्ति, तस्मादन्यत्र नोपसर्पन्ति, तमेवानुध्यायन्ति, तत्रैव निवसन्ति इति सूचयन्, यथैव नयनसुभगाः बलाका स्व भवन्तमाबद्धमण्डला आसेवन्ते, तथैवेह रमणीयामिमां वापीमाबद्धमण्डलाः हंसाः व्यपगतशुचः विस्मृतान्यकर्तव्याः सेवन्ते इति हृदये संभावयतीव ॥

कविरसौ 'तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः' इति पूर्वोक्तमाशयमनुसंधायैवेह 'मानसं संनिकृष्टं न ध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः' इति निपुणं वर्णयति ॥

तस्यास्तीरे विहितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततटितं त्वां तमेव स्मरामि ॥१०॥

पूर्वमेघे 'तां चावश्य दिवसगणनातत्परम्' इति पद्ये प्रेयस्याः जीवितं प्रति तत्तदमङ्गलमाशङ्क्य, आशातन्तुनैकेन कृच्छ्रात्प्राणान् धारयेदियमित्यात्मानमाश्वासयन्नपि इह कमनीयया कनककदल्या निरन्तरमुपगूढं क्रीडाशैलं हृदयावर्जकमुद्वीक्ष्य प्रतिक्षणमुपचीयमानानङ्गवेदनाजर्जरितशरीरा पेशलाङ्गी गेहिनी कदाचित् प्राणानप्युत्सृजेदिति भावयन् यक्षः, नितरां कातरेण चेतसा किमप्यवचनीयमालिखन्, 'ननु उपान्तस्फुरिततटितं मेघं यदृच्छया निरीक्षमाणस्य मे ईदृशी दुरवस्था संपन्ना; एवं सत्युपवने सर्वात्मना विद्युत्वन्तं वलाहकमनुकुर्वन्तं कनककदलीसमालिङ्गितं क्रीडाशैलम् अजस्रं नयनपथातिथीभूतमनुपश्यन्त्या सुकुमाराङ्ग्या तया कथं वा जीवितुं शक्यते' इति रणरणकेनाक्रान्तहृदयः, आत्मना दत्तहस्तया क्रीडाशैले पादचारेण विचरन्त्या प्रियतमया सह सकौतुकमनुसेवितानि रतिपरिमलोद्गारीणि शिलावेश्मान्यनुस्मरतीति मन्यामहे ॥

रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरवकवृतेर्माधवीमण्टपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहलच्छद्मनास्याः ॥ ११ ॥

इत्थमनुभूतपूर्वान्भोगान्मुहुर्मुहुरनुचिन्तयन् यक्षः तस्मिन्नेव शैले प्रियतमापादपङ्कजस्पर्शसुखमदिरास्वादसुखादिकमनुस्मारितः, 'पूर्वं यथा मेघस्य रमणीयेन दर्शनेन श्रवणसुभगेन गर्जितेन बलाका मही च गर्भभरालसा समुद्भिन्नकन्दलकुसुमा च समभूताम्, तथैवेह उत्तमवनितायाः स्पृहणीयपादस्पर्शेन आस्वाद्यया वदनमदिरया च रक्ताशोकः केसरश्चोद्भिन्नकिसलयः बहुलपरिमलकुसुमपुञ्जकञ्चुकितश्चानन्दयतः लक्षकान्' इति व्यञ्जयतीव ॥

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-

मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।

तालैः शिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे

यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥ १२ ॥

प्रियसखं शैलमापृच्छ्य आत्मनो निमित्तं दीर्घायामसध्वानं विलङ्घ्य अनतिपरिचितमिमं प्रदेशमुपगच्छन्तं भवन्तं संभावयितुमुपतिष्ठमानः तवाप्याप्ततमः नीलकण्ठो नाम कश्चन सुहृदत्यन्तं हर्षभराक्रान्तहृदयः चिरपरिचितप्रदेशत्यागेन तदा तदा जायमानामुत्कण्ठां ते विनोदयिष्यति' इति मेघं प्रोत्साहयन् यक्षः, यथैव 'रघुपतिपदैरङ्कितो गिरिः जनानामत्यन्तं पूजनीयः, तथैव प्रेयसीपदैरङ्कितः क्रीडाशैलः नितरामात्मनो बहुमानपदमिति सूचयन्, मेघदर्शनानन्देन नृत्यन्तं नीलकण्ठमुद्वीक्षितुं कदाचिदात्मनः प्रेयसी गृहाद्बहिरागच्छेदिति मन्त्रयतीवात्यन्तं कातरेण चेतसा ॥

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथा

द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ।

क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥

पूर्वस्मिन् पद्ये 'दिवसविगमे' इत्यनेनैव हृदये संभावितां आत्मनो वियोगेन विरतोत्सवस्य संवत्सरपारिमितायां दीर्घरात्र्यां गाढान्धतमसे निमग्नस्य भवनस्य निःश्रीकतामिह रमणीयेन दृष्टान्तेन विशदयन् यक्षः, 'प्रालेयास्रं कमलवदनात् सोऽपि हर्तुं नलिन्याः' इत्यादि पूर्वोक्तमाशयमनुस्मारयन्, 'मार्गं तावच्छृणु कथयतः' इत्यारब्धं रामगिर्याश्रमादात्मनो भवनद्वारपर्यन्तं मार्गानुवर्णनं 'एभिः साधो' इत्यनेनोपसंहरन्, यथैव कमलिनी सूर्यादन्यत्र न रमते तथैवात्मनः प्रेयस्यपीति मनोरथशतैर्निश्चिन्वन्, 'साधो' इत्यनेन मेघे आत्मनः कृतज्ञतामाविष्कुर्वन्, परदुःखासहत्वं परार्थैकफलप्रवृत्तिमत्त्वं च साधूनां लक्षणमिति चोपदिशति ॥



॥ श्रीः ॥

# ॥ राजकीयगुणप्रशंसा ॥



श्रीमान भारतभूपतिर्निजजनानन्याद्दशं पालयन
सर्वान् स्वस्वमते रतानविरतं कुर्वन जगत्या हितम् ।
शास्त्रे सूरिषु चारिवर्गशमने बद्धादरः सप्तमः
एड्वर्डेष चिराय भूमिमपि शास्त्वित्येव देवं नुमः ॥

प्रथमं तावद्राजपदार्थं विचारयामः ; रञ्जयति प्रजाः इति राजा । रञ्जरागे । रागो नाम प्रेमातिशयः । जनानामतिप्रियं जनयतीत्यर्थः । इदानीमस्मदीयभारतराजस्य किं तादृशगुणोऽस्तीति विमृशामः । अयं किल आसेतुहिमाचलमापूर्वापरवारिनिधि च वर्तमानस्य भारतदेशस्य चक्रवर्ती । स्वकीयस्य आङ्ग्लराज्यस्यापि भूपतिः । तत् कथं तद्देशीयानामस्मद्देशीयानां सर्वेषामपि जनानां प्रियं जनयतीति चेत् अतिनिपुणत्वात् धर्मज्ञत्वात् नयवित्त्वाच्च तथा प्रीणयतीत्यत्र को वा संशयः ? । किंचासौ राजा नलरामयुधिष्ठिरप्रमुखान् युगान्तरस्थितान् , चन्द्रगुप्तभोजविक्रमऔरङ्गसीबूप्रभृतीनस्मिन् युगे स्थितान् सर्वानपि नृपतीन् प्रज्ञया पराक्रमेण विनयेनोद्यमेन त्यागशौर्यादिभिरन्यैश्च गुणैरतिशेते । केचित्तु— ननु युगान्तरस्थिताः युधिष्ठिरादयः धर्मपथाद्रेखामात्रमप्यस्खलन्तो मनुनीतिमनुसरन्तः सामदानभेददण्डाख्यैश्चतुर्विधोपायैः ' गुरूपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम् '

इति प्रजाः परिपालयन्तः खल्ववर्तन्त । तन् कथं तानप्ययमतिशेते इत्युक्तम्?—इति पृच्छेयुः । तत्रोच्यते । ते च युधिष्ठिरादयः धर्मादनपभ्रश्यन्तः प्रजाः पालयन्तोऽपि देशाद्देशं प्रति गमनावसरे सति जवनैस्तुरङ्गैः उह्यमानं रथमारुह्यैवाभिमतं देशमुद्दिष्टकालात्पूर्वं पश्चाद्वा गच्छन्त आसन् । प्रकृतीनां तु तादृगवसरं नाजीगणन । ते च जनाः किं वा कुर्युः । खेदातिशयेन तत्रागच्छन्त एव प्राणांस्त्यजेयुः । गत्वा पथि विनश्येयुर्वा । इदानीं तु इदानींतनानां चक्रवर्तिनामनुरोधेन आङ्लविभूपज्ञं धूमशकटमारुह्य गच्छन्तः निर्धना अपि जनाः अभिमतं देशं स्वल्पेनैव धनव्ययेनाधिगच्छन्ति । पुरा तु भारते वर्षे अष्टमांशपञ्चकाधिको भागः अरण्यमासीत् । तादृक्षेऽपि काले केचित् बलाधिक्यान् पादेनैव समचरिषत । इदानीं तु कलौ दुर्बला एते नरा विनाऽनेन बाष्पिकाशकटेन किं दूरदेशान् गमिष्यन्ति? नैव नैव । पुरा कदाचिन् रोमपादे नाम राज्ञि अङ्गान् शासति, द्वादशवार्षिकः क्षामः समभून् । तदानीं ते जनाः आहाराभावेन केचिन्मृताः केचिद्राजानमुपालभमानाः द्वीपान्तरं वनान्तरं च गताः । एवमतिक्लिष्टा अवर्तन्त । इदानीं तु अस्मिन् राज्ये क्षामयुक्ते आस्माकीनो राजा देशान्तरात् द्वीपान्तरादपि अग्निनावा स्वल्पेनैव धनव्ययेन तण्डुलादिकं समानाय्य सुखं प्रजाः पालयति । अन्यच्च, पुरा पत्रप्रेषणावसरे जाते कस्मिंश्चित् भृत्ये पत्रादिकं दत्वा धनं च भूरि समर्प्य तं प्रेषयेयुः । स च गतः किं पथि क्षुत्तृष्णासमाधिक्यान्मरिष्यति? । किंवा व्याघ्रादिभिः हिंस्रैर्व्यापादितो विनंक्ष्यति? । अथवा किमुद्दिष्टं देशं गन्तुं पन्थानमजानन्

पथि निराहारोऽटिष्यति ? । उत किं वा तत्र गत्वा प्रतिवृत्तं ज्ञात्वा आगच्छन् मध्ये परं क्लेशमनुभविष्यति तस्करादिभिः ? हा हन्त ! एतादृशेभ्यो बहुभ्यः कृच्छ्रेभ्योऽपि विमुच्यमानादेव संदेशहरान् प्रतिवृत्तं ज्ञातवन्तः आस्माकीनाः प्राञ्चः । इदानीं त्वयं भूपतिः पत्तनेषु जनपदेषु शाखानगरेषु ग्रामेषु उपशल्येषु च दूरवर्तिषु तत्र तत्र पत्रप्रेषणशालां प्रतिष्ठाप्य तद्द्वारा अनतिकाचव्ययेनैव देशान्तरस्थितस्य निर्धनस्यापि जनस्य पत्राणि दापयति । तद्द्वारैव अभिमतानि द्रव्याणि मित्रेभ्यः प्रेषितुमपि शक्यन्ते । पुरा हि याते च कालधर्मं महाराजे दशरथे, रामे चासति, भरतं मातुलगेहस्थमानेतुं दूतान् केकयान्प्रति प्रेषयामासुः । तेऽपि जवनैस्तुरङ्गैः पन्थानं संकोच्य तत्र गत्वा भरतेन सह ततः प्रस्थाय रथेनाष्टभिर्दिवसैरयोध्यां समागच्छन महाराजेन तेनापि विंशत्यधिकैर्दिनैः समागतम् । अन्ये तु किंवा कुर्युः । विनैव पुत्रसंस्कारादिना मृतं दहेयुः । संप्रति तु यदि लिख्येत कश्चन लेखः सच अनन्तरे दिवसे अन्यस्मिन दिवसे वा तत्र गच्छेन । सच शीघ्रमेव प्रस्थाय बहुदूरस्थोऽपि धूमशकटेनात्र पञ्चषैर्दिवसैरागच्छेन । अथवा तन्त्री नाम काचनेदानींतनराजकीयोपज्ञं वर्तते । सा च मनोवेगैव । न संशयः । तद्द्वारा घटिकाद्वयमात्रेण दूरदेशवार्ता जानन्ति । अपरं च यदि दूरदेशेष्वटन कश्चिन धनहीनो बलविहीनश्च अत्र आगन्तुमशक्तः कृच्छ्रमनुभवति । तदा यद्ययं तन्त्रीमार्गेण स्वनगरस्थं स्ववार्तां ज्ञापयति तदा अयं जनोऽस्मिन पत्तने वर्तमानायां लेखप्रेषणशालायां तेनाभिलषितं धनं दद्यात् । स च तन्त्र्या तस्मिन पट्टणे वर्तमानायाः लेखप्रेषणशालायाः अधिकारिणे एत-

स्मात् धनं स्वीकृतमिति वार्ता निवेदयेत् । स च सर्वत्राप्यैकराज्यात् तच्छालातो धनं तस्मै वितरेत् । अपरं च सल्लॉपतन्त्री (Teliphone) नाम काचनैतद्राजकीयोपज्ञं वर्तते । तया च प्रभवः विनैव वार्ताहरेण दूरप्रदेशस्थैः मित्रैः सह व्यवहरन्ति । एवं केनाप्यननुष्ठितपूर्वाण्यद्भुतानि कार्याण्युपज्ञाय जनान् सुखेनावस्थापयति ॥

पुरा यदि कश्चन रुग्णः स्यात् तर्हि तस्य रोगचिकित्सायै वैद्यानामधिकधनप्रदानेन रोगान्निवारयामासुः । इदानीं तु राजकीयैव काचन भिषक्शाला तत्र तत्र नगरेषु प्रतिष्ठापिता विराजते । तत्र च सर्वेषामपि जनानां विनैव काचजिघृक्षया भेषजानि देयानीति नियमश्च कल्पितः । ते च वैद्यास्तथैव कुर्वते । जनाश्चापरिमितं सुखमनुभवन्ति ॥

अपि च पुरा विप्रः कश्चन विद्यार्थी यदि उपनयनानन्तरं गुरुनिकटं प्राप्य तदनुज्ञामवाप्य अस्य शुश्रूषादिकं निर्वर्त्य तस्य विरामकाले तेनाहूतोऽधीयानः विंशतिं त्रिंशतिं वा वत्सरानधीत्यैव विद्वान स्यात् । अन्तरान्तरे च महत् कृच्छ्रमनुभवन्ति स्म मादृशा विप्रवटवः । इदानीं तु तत्रतत्र संस्कृतकलाशालाः भारतराजकीयाधिकारिणः प्रतिष्ठाप्य अल्पेनापि श्रमेण विना विप्रवटून् अध्येतुं नियुञ्जते । आङ्ग्लकलामभिवर्धयितुं च तत्र तत्र स्थापितासु पाठशलासु स्थितिजुषामध्यापकानां वेतनं च स्वयमेव ददानाः अध्यापयन्ति माणवकान् । एतादृशगुणैरपरैश्च तान् पूर्वोक्तान् नलरामयुधिष्ठिरप्रमुखान सर्वानप्यतिशेते ह्ययं भारतसार्वभौमः ॥

द्वितीयानां तु चन्द्रगुप्तौरङ्गसीब्प्रभृतीनामतिशयः विदित

एव सर्वेषाम् । तथापि किंचिदिव कथयामि—ते च टैमर् औरङ्ग-
सीब् तिप्पुप्रभृतयो भारतमाक्रम्य तत्र स्थितान् विप्रान् क्षत्रबन्धून्
वैश्यान् शूद्रान्वापि सर्वान् वर्णान् तुरुष्कान् कर्तुं प्रवृत्ताः तथा
अकुर्वाणानपि हिंसन्तः गृहाभ्यन्तरं प्रविश्य तत्रस्थं धनादिकमप-
हरन्तः तानतीव पीडितवन्तश्चासन् । तस्मिन् काले इतरे च के
चिन् तस्कराः पथिकवेषधारिणः पथिकैः सह संचरन्तः मध्येमार्ग
तेषामास्येषु कन्था निक्षिप्य वित्तान्यपाहार्षुः । इदानीं च तेषां 'प-
श्यतो हरा' इति संज्ञा श्रूयते । अतश्च—'भामिन्यो भवनेषु भूष-
णगणैरङ्गानि संस्कुर्वते—' इत्यत्र जगन्नाथोक्तौ कैश्चिन् व्याख्यायते
'तदानीं रात्रौ तस्करसंचारप्रचुरतया तेषां च भामिनीनामङ्गनिवे-
शितान्याभरणानि नापहरेम, इति निबद्धसंधतया च ताभिरङ्गे
निवेशितान्याभरणानि' इति । तेन च पुरा चोराः अधिकतया आस-
न्निति ज्ञातुं शक्यते । तादृशान् दुष्टान् नरपतीन् नाममात्रावशि-
ष्टान् कृत्वा ततः परं सिंहासनगतान् बहून् क्षोणीकोणपालकान्
परस्परं विगतकलहान् विधाय सुखेन जनान् अनुष्ठितस्वस्वमताचा-
रान् परिपालयत्ययं चक्रवर्तीति विदितमेव सहृदयानाम् । तथा
चोक्तम्—

'तादृक्षे समये कठोरविचरद्धारालकालानल-
ज्वालाजालसहोदरे बत! परित्रस्ते समस्ते जने ।
दिष्ट्या भारतवर्षसंकलितया श्रीमान् दयालुर्महान्
एड्वर्ड्सप्तम एष भारतधुरामात्मन्यथासञ्जयन् ॥' इति ।

हूणोत्तमस्याप्यस्य संस्कृते च कियान्! आदरः । अयं च प्रत्या-
ङ्गलकलाशालं संस्कृताध्ययनमपि परिकल्प्य तत्कृते कंचन पण्डि-

तं च वेतनदानेन प्रतिष्ठाप्य माणवकानध्यापयति । ‘प्रभुता सर्वतो मुखी’ इति न्यायेन स्वातन्त्र्यात् रिक्तीकर्तुं शक्यमाना अपि तत्रतत्र संस्कृतकलाशालाः आदरेणोत्तरोत्तरमभिवर्धयते ॥

केचित्तु समालोचनविधुराः—पुरा हि राजानः शास्त्राण्यधीत्य आत्मनः सकाशमागतस्य कस्यचित् पण्डितस्य जीवितपर्याप्तं धनं बहुमानं च ददुः । इदानीं तु अयं च राजा आङ्ग्लकलाशालायामधीत्य तद्भाषाप्रवीणानेव कस्मिंश्चिदधिकारे नियोज्य मासवेतनं च वितार्य बहुमन्यते, न तु गैर्वाणीं वाणीमभ्यस्य तर्के व्याकरणे च वाक्यार्थवक्तॄणां वेदान्ते विवदमानानां च । कोऽसौ राजा? तुच्छस्याप्यस्य राजत्वं वितीर्णवन्तं ब्रह्माणमेव विनिन्देम" इति महाराजमप्यमुमपवदन्ते । तच्च तेषामसंपूर्णविद्यतामेव प्रकटयति । न तु राज्ञो माननीयेष्ववमन्तृत्वम् । नापि तत्पक्षपातिनामवैदुष्यम । इमे खलु शास्त्रीयमामोदमेव जिघ्रन्तः कार्यावसरे किमप्यननुस्मरन्तः स्वबहुमानं स्वयमेव नाशयन्ति । ‘एकयापि कलया विशुद्धया योऽपि कोऽपि भजते गिरीशताम्’ इतिवन् यदीमे एकस्यामपि कलायां प्रवीणाः स्युः तदेमान् को वा न पूजयेत्? न वा बहुमन्येत? । अत्र च विषये श्रीमन्तस्तत्रभवन्तः संस्कृतकलाशालापरीक्षाधिकारिणः श्रीकृष्णमाचार्या एव प्रमाणम् । यत इमे शास्त्रार्णवमुन्मथ्य विद्योज्जीवकं ज्ञानामृतमादाय तच्च सत्पात्रेषु प्रायुञ्जत, अत एव तेभ्यो विद्यानिधिरिति विरुदं वितीर्णं नवद्वीपवासिभिः एतच्चक्रवर्तिप्रोत्साहितैः पण्डितसमूहैः । अन्ये च वर्तन्ते एतद्राजवितीर्णमहामहोपाध्यायविरुदभाजो नीलमेघशास्त्रिणः ॥

किंचासौ भूपतिः एतादृशीषु संस्कृतकलाशालासु आङ्ग्लकलाशालासु च पण्डितान् महता मासवेतनेन प्रतिष्ठापयति । श्रीमत्पञ्चनदेऽपि एतादृशाः तर्कव्याकरणादिशास्त्रपर्वतशिखरमधिरूढाः उपदेशाः उपाध्याया वर्तन्ते । इत्थं परःसहस्रं पण्डिताः राजदत्तबिरुदाङ्किताः जगति विराजन्ते । इतः परं च भूतचन्द्राङ्कभूमिमिते (1915) खिस्तुसंवत्सरे आङ्ग्लभाषायां संस्कृतविद्यायां च पण्डितानां परीक्षया प्राचीनकालाध्यक्षः (Master of Oriental learning' इति च बिरुदं वितरिष्यते इत्यपि श्रूयते । इत्थमनितरसाधारणमादरं संस्कृतभाषायामपि निहितवन्तं भाराचक्रवर्तिनमप्यपवदमानास्ते कीदृशः इति न जानीमहे ॥

इत्थं त्यागवीर्यविनयौदार्यगाम्भीर्यादिभिरन्यैश्च गुणैरनुपमं महान्तं चक्रवर्तिनं प्रसूतवत्यास्तन्मातुश्च कीदृशं स्यात् गाम्भीर्यादिकमिति विमर्शका विमृशन्तु । सा च स्वयमेव शत्रून् नगरान् विद्राव्य षष्ट्यधिकान् संवत्सरान् विनैव सामन्तभीतिं राज्यमकरोदिति इदमाश्चर्यजनकं खलु सहृदयानाम् । तथाचोक्तम्—

दुष्टाः केवलमात्मदौष्ट्यमजहुः शिष्टाः प्रमोदं ययुः
दुर्भिक्षं सपदि प्रशान्तमजनि स्वास्थ्यं प्रजानामभून् ।
'रामाराज्यमिदं समानविभवं श्रीरामराज्येन किं
त्वाकारेण ततोऽधिकं विजयते विक्टोरियार्याधिकम् ॥

इति । तादृश्या विक्टोरियानाम्न्या माहिष्याः पुत्रोऽप्ययं 'न कारणात् स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ।' इतिवत् सर्वैरपि गुणैः मातृसमानो जगतीं शास्ति इत्यजानन्तस्तु

नैव जगतीति निश्चयेन वक्तुं शक्यते । तस्याश्च राज्ञ्याः अयं प्रथमः पुत्रः । भूपतीनां विष्ण्वंशत्वात् अयं च विष्ण्वंशः । अस्य च प्रथमं कदाचित् पट्टाभिषेकमहोत्सवो निश्चित्य करणावसरे विघ्नैरभिहतः पुनरकारि । अतश्चामुं राघवमेव निश्चिन्वते सहृदयाः । तथाहि—

'धीरं वीरमुदारमेनममलप्रज्ञं प्रजापालन-
श्रद्धं बद्धदयं विनीतहृदयं संशेमहे राघवम् ।
यस्माद्विष्णुकलान्वितौ गणनया तत्सप्रमौ द्वावपि
व्यावृत्तः प्रथमं द्वयोरपि यतः पट्टाभिषेकोत्सवः ॥'

इति । एवं सर्वथा जनानामुपकुर्वन्नयं नरपतिः प्रतिनगरमेकं व्यवहारविचारणस्थलं कारागेहादिकं च परिकल्प्य तेषु च स्थलेषु व्यवहारविचारणज्ञं कंचित् प्रधानपुरुषं प्रतिष्ठाप्य तेन च निष्पक्षपातं वादिनः प्रतिवादिनो वा अपराधं विमृश्य तं चापराधिनं दण्डयतैव भवितव्यम्, नतु उत्कोचादिकं गृह्णतेति नियमश्च कल्पितः । स च तं विधिमनुतिष्ठति ॥

अपि च पुरा अध्येतुं पुस्तकानि तालपत्रैर्निर्माय तस्मिन् महता प्रयासेन लिखित्वा पठन्तः महत् कष्टमनुभूतवन्तः आस्माकीनाः प्राञ्चः । अपि तु तदा तेषां बलाधिक्येन अनलसतया च सावधानं विलिख्य पठतां बुद्धिविस्तृतिः परपराजयकारणं ग्रन्थनिर्माणसामर्थ्यं च अभवदिति विषये तेषां पाण्डित्यं बुद्धिकौशलं तदधीनानि तालपुस्तकानि च साक्षीणि । ततः परं कलौ बलहीनतया अलसतया च विलिख्यपठितुमशक्नुवानानां पुरः स्थातु-

| प्रमाणानि | | पुटः | प्रमाणस्थानानि |
|---|---|---|---|
| जगत्प्रकृति | ... | २७ | अहि २. |
| जगदेतत् | ... | ३८ | वि-पु ५ १९. |
| जनयन्प्र | ... | २९ | रा-बा १ ६५. |
| जन्माद्यस्य | ... | ३७ | शारी १ १ २. |
| जायमान | ... | ८० | महा-शा ३५८ ७३. |
| ज्ञातं मया | ... | ४४ | |
| ज्ञानशक्ति | ... | ९ | वि-पु ६ ५ ७९. |
| ज्ञानी तु पर | ... | ८५ | गी-सं २९. |
| ज्योतींष्यादि | ... | २७ | महा-उद्यो ९४ ४५. |
| **न** | | | |
| नतस्तं म्रि | ... | ६२ | वरा-रह. |
| ततः सा ह्री | ... | १२ | रा-सु ५८ ९२. |
| ततोऽवलोकि | .. | ८ | वि-पु १ ९ १०६. |
| तत्पादभक्ति | ... | ५४ | अहि |
| तत्सवितुः | ... | २६ | तै अरु १ ११ २. |
| तदेकोपा | ... | ७९ | भरत |
| तदेनत्सृ | .. | ४ | पाञ्च |
| तद्गुणसार | ... | ५३ | शारी २ ३ २९. |
| तद्विज्ञानार्थं | ... | १३ | मुण्ड १ २ १२. |
| तया सहासी | ... | ३४ | स्तोत्र ३९. |
| तमसः पर | ... | ३६ | रा-यु ११४ १५. |
| तमीश्वराणां | ... | ७ | श्वेता ६ ७. |
| तव भरोऽह | ... | २० | श्रीरं-उ-श १०२. |
| तवानन्त | ... | २७ | वरा ७५. |
| तस्य नाम्न | ... | १४ | महा-वन १९१ १३३. |

| प्रमाणानि | | पुटः | प्रमाणस्थानानि |
|---|---|---|---|
| विद्यते स्त्रीषु | ... | १० | रा-सु १६ ९. |
| विद्याचोरो | ... | ५० | शै-पु |
| विद्यामहाय | ... | ८ | महा-शा ३३९ ६६ |
| विना हेयैः | ... | ९ | वि-पु ६ ५ ७९. |
| विभीषणो | ... | ५९ | रा-यु १८ ३५. |
| विश्वमेवेद | .. | २३ | तै- उप २ १३. |
| विष्टम्भो दिवो | ... | ११ | नी-सू |
| विष्णुपत्नी | ... | ८ | नी-सू |
| विष्णुपोत | ... | ४३ | वि-ध १ ५९. |
| विष्णुवल्लभे | ... | ८ | वि-पु १ ९ १२९. |
| विष्णोर्देहानु | ... | ६ | वि-पु १ ९ १४५. |
| विहितत्वाच्च | ... | ८६ | शारी ३ ४ ३२. |
| वृद्धौ च माता | ... | ४६ | महा |
| व्यतिरेकस्त | ... | ७३ | शारी ३ ३ ५४. |

**श**

| | | | |
|---|---|---|---|
| शतहृदाना | ... | १० | रा-आर १६ ६. |
| शबर्या पूजि | ... | २८ | रा-बा १ ५६ |
| शरणं त्वां | ... | १५ | ब्रा-पु |
| शरणागत | ... | २७ | रा-सु २१ २०. |
| शरा नानावि | ... | ३२ | रा-उत्त १०९ ७. |
| शान्तानन्त | .... | ४ | चतु ४. |
| शिरसा याच | ... | ३० | रा-यु १२४ २१. |
| शिरोरोगः | ... | ५८ | वि-पु ६ ५ ३. |
| शीतोष्णवात | ... | ५८ | वि-पु ६ ५ ८. |
| शुद्धे महा | ... | ४ | वि-पु ६ ५ ७२. |

# शुद्धाशुद्धपत्रिका ।

| पृ. | प. | अशुद्धम् | शुद्धम् | पृ. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २ | ९ | वध्नाति | बध्नाति | ३२ | १३ | पुरुप | पुरुष |
| ,, | २६ | कज्ञान | गज्ञान | ३३ | १ | घवाधि | घनवाधि |
| ३ | २० | ध्यैव | द्ध्यैव | ,, | ६ | कूल | कूलं |
| ४ | ७ | कज्ञान | गज्ञान | ,, | १० | तद्वेग | तद्धेम |
| ,, | १० | पर्ना। | पर्ना ' | ,, | १४ | एब | एव |
| ,, | ,, | वल्लभा। | वल्लभे | ३५ | १५ | द्वाप | द्वीप |
| ८ | ११ | निजदेवीं | निचंदवीं | ३८ | २ | प्रेत्यक | प्रत्येक |
| १२ | १५ | मतर | मानर | ,, | ४ | तस्य | यस्य |
| १३ | ५ | शरण्य | शरण | ,, | ९ | निरस्मितुमिव | निरसितुमिह |
| ,, | १६ | तद्वदे | तद्दे | ,, | १० | मर्वाशरीर | सर्वशरीर |
| ,, | २४ | क्षूणां | क्षणां | ,, | २० | अन्यथापि | अन्यस्यापि |
| १६ | ५ | तावन | तान | ,, | २४ | लीलात्व | लीलत्व |
| १७ | १६ | मुपचा | मुपचया | ३९ | ११ | विभूतिना | विभूतीना |
| ,, | २१ | जक्षन्की | जक्षन्को | ४० | २१ | पर्यङ्क | पर्यङ्क |
| १९ | २४ | पाद्वधा | पाद्विधा | ,, | २८ | दशाभिः | दशभिः |
| २३ | १ | स्वरूप | स्वरूप, | ४२ | १३ | कारतम | कारकतमं |
| २४ | ९ | विभावा | विभवा | ,, | १९ | गतः | मृतः |
| ,, | ११ | भग | भगव | ४३ | २२ | भवतां | पततां |
| ,, | २१ | मेदोस्थि | मेदोऽस्थि | ४७ | १४ | जीवप्रदः | बीजप्रदः |
| २६ | १७ | सर्ववित् | मर्ववित्, | ४८ | ९ | वन्धु | बन्धु |
| ,, | १८ | सर्वेश्वरः | मर्वेश्वरः | ,, | ,, | राघनां | राधानां |
| २८ | १४ | परः दुः | परदुः | ४९ | ५ | स्वेष्ट | स्येष्ट |
| ३० | २१ | असख्ये | असंख्ये | ५० | ४ | वर्गयाः | वर्गयोः |

| पु. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | ६ | भूत्, 'स | भूत्स |
| ,, | १३ | प्रत्रृत्तौ | प्रपत्तौ |
| ,, | २४ | म च | सा च |
| ५१ | २५ | सर्गादि | स्वर्गादि |
| ५२ | ६ | स्वय त | स्वय- |
| ,, | ५ | वत्मु | वस्तु |
| ,, | ६ | कारीरी | कारिरी |
| ५३ | १४ | वृत्तेर्बन्ध | वृत्तैर्बन्ध |
| ,, | २५ | निष्ठत्व | निष्ठत्वं |
| ५५ | ७ | प्रात्यि | प्रीत्य |
| ,, | १४ | व्यवसायज्ञः | व्यवसायज्ञा |
| ५६ | ७ | बुध्द्या | बुद्धया |
| ५८ | १४ | त्यादिना | इत्यादिना |
| ६० | १० | भवाद्ध्या | भवात्तद्ध्या |
| ६३ | ३ | सापक्षे | सापेक्ष |

| पु. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | ५ | कल्पपूर्वा | कल्पःपूर्वा |
| ६४ | ५ | वयचेति | वयांचेति |
| ६७ | ७ | शारणागति | शरणागति |
| ७० | २५ | विर्य | वीर्य |
| ८३ | ४,५ | कुतर्कश्चकु-निश्चयः | कुतर्कनिचयश्चयः |
| ,, | ८ | कलुषै | कल्मषै |
| ,, | १४ | नवता | नावता |
| ८४ | ४ | म्भेधि | म्भोधि |
| ,, | १७ | महाम्भोधि | सुधाम्भोधि |
| ,, | १९ | शव्दः | शब्दः |
| ८५ | ,, | सागरस्यं | सागरस्य |
| ८६ | ७ | महतिः | महति |
| ८७ | २२ | क्लप्तज | क्लप्तजग |
| ८८ | १९ | स्वयम् | श्वयम् |